गन्धो वर्णः स्वरः सत्त्वं छायावर्तो गतिस्तथा ।
स्थानकं चैवमत्राहुर्हयलक्षणमष्टधा ॥ ३९ ॥

रूपावर्ता गतिश्छाया सत्त्वं वर्णः स्वरो बलम् ।
जवहीनस्य वाहस्य सर्वमेतन्निरर्थकम् ॥ ४० ॥

अष्टाभिर्गुणैर्युक्तोऽपि वाजी, एकेन वेगगुणेन रहितो न किंचित् । तस्माद्वेग एव प्रधानः ॥ ४० ॥

गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्त्वं सर्वं सत्त्वे प्रतिष्ठितम् ॥ ४१ ॥

लघुत्वं मातृदोषेण पितृदोषेण जायते ( जाड्यता ) ।
दौर्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनः ॥ ४२ ॥

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनाम् ।
श्रुतं द्विजानां धनिनामगर्वता
पराक्रमः शस्त्रबलोपजीविनाम् ॥ ४३ ॥

वक्षोजैर्हरिणाधिपप्रतिनिभैर्व्याघ्रोपमैर्बाहुभि-
रावर्तैश्च शुभैः प्रधानकुलजाः सुमृग्व(सुस्निग्ध)वर्णप्रभाः ।
उष्ट्राक्षाः प्रियदर्शनाश्च सुभगाः श्वासैः सुगन्धैश्च ये
धन्यास्ते जयराज्यवित्तसुखदाः संनाहिका भूपतेः ॥ ४४ ॥

एवमुक्तलक्षणा राजवाहनयोग्या नान्ये ॥ ४४ ॥

[ इति वेगः ] ॥

[ अथारोहणम् ] ॥

ऊरू स्थिरौ यस्य चलौ च पादौ
त्रिकोन्नतः सिंहसमानचित्तः ।
स वाजिवाहः कथितः पृथिव्यां
शेषा नरा भारवहा हि याने ॥ ४५ ॥

कुपिते पुच्छसंस्थाने श्रान्ते जानुद्वये तथा ।
सर्वथा प्राप्तदण्डस्य दण्डमेवं निपातयेत् ॥ ४६ ॥

---

40 = Aśvc 7.6. $AB_2D$ गतिः छाया for गतिश्छाया. $B_1$ omits the prose.
41 = Aśvc 7.7. $AB_2D$ सर्वसत्त्वे for सर्वं सत्त्वे.
42 = Aśvc 7.8.
43 = Aśvc 7.9. A बिभूषणं for विभूषणं. $B_2$ श्रुतां for श्रुतं.
44 = Aśvc 7.13. $B_2$ °वित° for °वित्त°. AD संन्नाहिका for संनाहिका.
45 = 8.4. $B_2$ उरू for ऊरू. A नारा for नरा.
46 = Aśvc 8.11. $AB_{1\cdot 2}D$ पुछ° for पुच्छ°. $B_2$ प्राप्तदण्डाश्च for प्राप्तदण्डस्य.

अस्थाने ताडितो वाजी बहून्दोषान्प्रकाशयेत् ।
तावद्भवन्ति ते दोषा यावज्जीवत्यसौ हयः ॥ ४७ ॥

अदण्डो न गुणान्कुर्यात्तस्माद्दण्डं प्रधारयेत् ।
बाल्यो वृद्धस्तथा रोगी दत्तस्नेहो महाबलः ॥ ४८ ॥

सर्वातिरिक्तकोष्ठश्च गुर्विणीं न च वाहयेत् ।
अतिश्रान्तोऽतिवृद्धश्च निःस्नेहोऽतिकिशोरकः ॥ ४९ ॥

शिरामोक्षे कृते तेषां प्राणहानिर्भवेद्ध्रुवम् ।
धनुरष्टादशं प्रोक्तं वाजिनां मण्डलं क्रमात् ॥ ५० ॥

समं च विपुलं चैव किंचित्पांशुसमन्वितम् ।
एकान्ते वाजिने(विजने)चैव रङ्गभूमिं हयं नयेत् ॥ ५१ ॥

सार्द्रां च कठिनां चैव पाषाणोदकगर्तकाम् ।
तृणकाष्ठसमायुक्तां रङ्गभूमिं विवर्जयेत् ॥ ५२ ॥

विण्मूत्रं कारयेदश्वं क्रोशक्रोशद्वयान्तरे ।
उदकं पाययेत्कामाद् घासपु( मु )ष्टिं च जीर्यते ॥ ५३ ॥

रक्तपित्तविकारे च दातव्यं शर्करोदकम् ।
जीवनं वातपित्तघ्नं वृष्यं बलमलं ततः ॥ ५४ ॥

क्षीरं घृतसमायुक्तं वारि शीतं तुरंगमः ।
पीत्वा परित्यजेद्दोषाञ्श्रमभाराध्वसंभवान् ॥ ५५ ॥

सायं करैर्ये पृथिवीं निहन्ति
हेषन्ति ये स्वामिमुखं निरीक्ष्य ।
प्रदक्षिणावर्तविकीर्णपुच्छा
जयावहास्ते समरे नृपाणाम् ॥ ५६ ॥

[ इत्यारोहणम् ] ॥

---

47 = Aśvc 8.13. A अस्थान्ये for अस्थाने.
48cd = Aśvc 8.22cd. $AB_2D$ बाल्ये for बाल्यो.
49ab = 8.23ab. A सर्वातिरिक्तकाष्ठश्च, $B_1$ °कोष्टश्च for सर्वातिरिक्तकोष्ठश्च. $B_1$ गुर्विणी for गुर्विणीं. A °वृधश्च for °वृद्धश्च. $AB_2$ निस्नेहो for निःस्नेहो.
50cd = Aśvc 9.1cd. AD भवेध्रुवं, $B_{1\cdot 2}$ भवेत् ध्रुवं for भवेद्ध्रुवं.
51 = Aśvc 9.23cd and 24ab. $AB_2$ वाजिनं for विजने.
52 = Aśvc 24cd and 25ab. A विवर्जयेत् for विवर्जयेत्.
53 = Aśvc 25cd and 26ab. $B_2$ विण्मुत्रं for विण्मूत्रं.
54 = Aśvc 9.34 cd and 35ab.
55 = Aśvc 9.36.
56 = Aśvc 9.39. $AB_{1\cdot 2}D$ पुछा for पुच्छा.

[ अथ श्लेष्मरक्तलक्षणम् ] ॥

आषाढसमये प्राप्ते शिरामोक्ष( क्षे )ण कृत्स्नशः ।
तस्मात्संशोधयेद्रक्तं वाजिनो दोषसंभवम् ॥ ५७ ॥

यदि रक्ताधिको वाजी शष्पमश्नाति कर्हिचित् ।
रक्तात्संजायते पित्तं पित्तान्नाशमवाप्नुयात् ॥ ५८ ॥

रक्तहीनो यदा शष्पं रूक्षोऽश्नाति तुरंगमः ।
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात् ॥ ५९ ॥

रक्तपित्तप्रकोपेन यदा संपीड्यते हयः ।
तदा कण्डूः समासाद्य घर्षयेत्सततं वपुः ॥ ६० ॥

छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम् ।
मुहुर्वाञ्छति पानीयं रक्तपित्तातुरो हयः ॥ ६१ ॥

शिरामोक्षं विधायास्य दद्यात्त्रिकटुकं गुडम् ।
ततः शुद्धिमवाप्याथ नीरोगः संप्रजायते ॥ ६२ ॥

श्लेष्मरक्तप्रकोपेन यदा संपीड्यते हयः ।
अधोवक्त्रो भवेन्नित्यं कासते च मुहुर्मुहुः ॥ ६३ ॥

आहारं न च गृह्णाति नोत्साहं कुरुते यदा ।
नासाग्रेण क्षिपेत्तोयं वह्निमातपमिच्छति ॥ ६४ ॥

शिरामोक्षं विधायास्य दद्याच्छुण्ठ्या समन्वितम् ।
घृतं गुडसमायुक्तं येनारोग्यं प्रपद्यते ॥ ६५ ॥

नेत्रप्रान्तेऽश्रुपातेन कण्डूस्तस्योदरे मता ।
स हि मृत्युमवाप्नोति षण्मासाभ्यन्तरे हयः ॥ ६६ ॥

यस्य नेत्रान्तेऽश्रुबिन्दुधारापूर्वा निपतति तस्योदरमध्ये कण्डूरुत्पन्नेति ज्ञेयम् । तस्य चिकित्सा नास्ति । स षण्मासमध्ये निपतेत् ॥ ६६ ॥

---

57 = Aśvc 10.3cd and 4ab. $AB_2D$ शरामोक्षण for शिरामोक्षेण.

58 = Aśvc 10.5cd and 6ab.

59 = Aśvc 10.7cd and 8ab. $AB_2$ रक्तहिनो for रक्तहीनो.

60 = Aśvc 10.9cd and 10ab. AD कण्डू, $B_2$ कण्डु for कण्डूः.

61 = Aśvc 10.10cb and 11ab.

62 = Aśvc 10.12. $B_2$ शिरोमोक्षं for शिरामोक्षं. $B_2$ निरोगः for नीरोगः.

63 = Aśvc 10.14ab and 15ab. $AB_2$ संपिड्यते for संपीड्यते. $B_2$ अधोवग्त्रो for अधोवक्त्रो. $AB_{1\cdot 2}D$ add इदं श्लेष्मरक्तलक्षणं after 63.

64 = Aśvc 10.15cd and 16cd. $B_2D$ क्षिपेतोयं for क्षिपेत्तोयं. $B_1$ इछति, $B_2$ इस्छति for इच्छति.

65 = Aśvc 10.17.

66 = Aśvc 10.18. AD कण्डुः for कण्डूः. $B_1$ omits the prose. $AB_2D$ निपतयेत् for निपतेत्.

शुण्ठ्या युतं गोक्षुरकं घृतं च
श्यामावचाहिङ्गुयुता च यष्टिः ।
कफप्रणाशाय विनिर्मितोऽयं
पिण्डः प्रसिद्धश्च कफोदयेऽश्वे ॥ ६७ ॥

कुक्षिद्वये धृतं तीव्रं मुहुः श्वासं च मुञ्चति ।
नैकत्र रमते स्थातुं हेषते च निरर्गलम् ॥ ६८ ॥

वातरक्तार्दिते तस्मिञ्शिरामोक्षं विधाय च ।
घृतयुक्तं लोहचूर्णं दद्यादश्वचिकित्सकः ॥ ६९ ॥

संनिपातोत्थरक्तेन यदा संपीडयते हयः ।
तदा वेपथुमाप्नोति कासते च निरर्गलम् ॥ ७० ॥

निद्रालस्याग्निमान्द्यानि पुरीषं च मुहुः सृजेत् ।
कर्णयोः पतनं चैव वक्त्रे लालाविमोक्षणम् ॥ ७१ ॥

तदा संशोधयेद्रक्तं ततो लङ्घनमर्हति ।
यावद्दोषस्य निर्नाशः स्तोकोदककृताशनः ॥ ७२ ॥

क्वचिदुष्णं क्वचिच्छीतं क्वचिद्भेषजसंयुतम् ।
चिकित्सायुक्तितत्त्वज्ञैर्वारि वार्यं न कर्हिचित् ॥ ७३ ॥

शिरीषं श्रीफलं वाम्लवेतसं चैव वृद्धिभाक् ।
मन्दाग्निं वायुदोषं च वाजिनां शमयेद्ध्रुवम् ॥ ७४ ॥

नीलपीते च नेत्रान्ते भवेतां वाजिनः क्वचित् ।
स निर्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥ ७५ ॥

---

67 = Aśvc 10.19.

68 = Aśvc 10.20cd and 21ab. AD घृतं for धृतं.

69. A °रक्ताद्दिते, $B_1$ °रक्ताद्दिते for °रक्तार्दिते.

70 = Aśvc 10.25cd and 26ab. $B_2$D निरर्गळं for निरर्गलं.

71 = Aśvc 10.26cd and 27ab. $B_2$ वपुषं for पुरीषं. $B_1$ मुहु for मुहुः. $B_2$ वक्त्रे for वक्त्रे. $B_2$D लाळा° for लाला°.

72 = Aśvc 10.27cd and 28ab. A अर्हसि for अर्हति. A °द्क° for °दक°.

73 = Aśvc 10.28cd and 29ab. A शितं for शीतं. $B_1$ °तद्वज्ञैः for °तत्वज्ञैः.

74 = Aśvc 10.30cd and 31ab. $AB_1$D शिरीष, $B_2$ शिरि(ष) for शिरीषं. $AB_2$ वृद्धभाक्, $B_1$ वृद्धिभाग्, D(?) for वृद्धिभाक्. $AB_{1\cdot2}$D(?) मन्दाग्नि for मन्दाग्निं. A शमयेध्रुवं, D शमयेत्ध्रुवं for शमयेद्ध्रुवं.

75 = Aśvc 10 34cdef. $B_2$ निलपिते for नीलपीते. A आप्नोति, $B_1$ अवाऽप्नोति for अवाप्नोति. $AB_{1\cdot2}$D असंशयः for असंशयम्.

जिह्वायां जायते बिन्दुरकस्माद्यस्य वाजिनः ।
कृष्णस्तु जीवते मासं स वाजी नात्र संशयः ॥ ७६ ॥

यस्य जिह्वायां कृष्णबिन्दुर्दृश्यते तस्य मासमात्रेण मृत्युः ॥ ७६ ॥

पञ्चभिर्नीलवर्णैश्च षड्भिर्वज्रनिभैस्तथा ।
सप्तभिः पाटलाकारैर्नवभिः पीतसंनिभैः ॥ ७७ ॥

जिह्वायां नीलैर्बिन्दुभिः पञ्चमासं जीवितम् । वज्रवर्णैर्हीरकवर्णैः [ षण्मासं ] जीवितम् । पाटलवर्णैः । श्वेतरक्तस्तु पाटलः । तदाकारैः [ सप्तमासम् ] । पीतै [ र्नवमासं ] जीवितं नाधिकमिति ॥ ७७ ॥

यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा च कठिनाकारा मासषट्कं न जीवति ॥ ७८ ॥

यस्य नेत्रे हरिद्राभे स्यातां वातादिभिस्तथा ।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्तितम् ॥ ७९ ॥

यस्यैकं लोचनं नीलं द्वितीयं रक्तसंनिभम् ।
वातपित्तार्दितो मासैर्नवभिर्मृत्युमि( मृ )च्छति ॥ ८० ॥

[ इति श्लेष्मरक्तलक्षणम् ] ॥

## [ अथ रक्तमोक्षणम् ] ॥

द्विसप्ततिसहस्राणि नाडीनां संभवन्ति च ।
वाजिनामिह सर्वेषां यासु रक्तं व्यवस्थितम् ॥ ८१ ॥
तासां निर्मोचनार्थाय द्वाराण्यष्टौ वदाम्यहम् ।

अश्वशरोरे नाडीसंख्या ७२००० । तासु द्वाराण्यष्टौ । तानि कथ्यन्ते ॥ ८१ ॥

---

76 = Aśvc 10.36. $B_2$ जिवते यासं for जीवते मासं. $B_1$ omits the prose. $B_2$D दश्यते for दृश्यते.

77 = Aśvc 38and39ab. A$B_2$D षड्भी for षड्भि°. $B_2$ पादला° for पाटला°. $B_2$पित° for पीत°. $B_1$ omits the prose. AD मास ५ जीवितं. A$B_2$D मास ६ जीवितं, मास ७, मास ९. for षण्मासं, सप्तमासं and नवमासं respectively.

78 = Aśvc 10.40. $B_{1\cdot2}$ कठिणाकारा for कठिनाकारा. $B_2$ मासष for मासषट्कं.

79 = Aśvc 10.45. A परिकीर्त्तीतं, D परिकीर्त्तितं, $B_2$ परिकिर्तितं for परिकीर्तितं.

80 = Aśvc 10.47. A$B_1$ °संन्निभं for °संनिभं. A$B_1$ °र्द्दितो for °र्दितो. A$B_{1\cdot2}$D इछति ($B_2$ती) for ऋच्छति.

81 = Aśvc 11.1 $B_1$ omits the prose. AD omit संख्या.

कक्षे वक्षसि भाले च नासयोस्तु मुखे तथा ।
अण्डयोरथ पादेषु पार्श्वयोरुभयोरपि ॥ ८२ ॥

एषु स्थानेषु गुरूपदेशात्सम्यङ्नाडी परीक्ष्य शिरामोचनं कुर्यात् ॥ ८२ ॥

अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः ।
येषु रक्तं स्रुतं सद्यः करोति परमं सुखम् ॥ ८३ ॥

गुल्फे गले तथा मेढ्रे कक्षान्ते चैव पत्रके ।
गुदे पुच्छे च बस्तौ च जङ्घयोः सर्वसंधिषु ॥ ८४ ॥

जिह्वायामधरे चौष्ठे स्कन्धयोरुभयोरपि ।
कर्णयोर्मणिबन्धे च रुधिरं स्रावयेद्बुधः ॥ ८५ ॥

अथातः संप्रवक्ष्यामि प्रमाणं रुधिरस्य तु ।
शतं च मुखगल्लेभ्यः कक्षयोः शतमप्यथ ॥ ८६ ॥

शतस्यार्धं भालदेशे पुच्छादेवं च मेढ्रतः ।
जङ्घयोरुभयोश्चैव स्रावयेत्पञ्चविंशतिः ॥ ८७ ॥

द्वादशैव गुदे प्राहुरेतत्स्थानेषु बुद्धितः ।

रोगकालवयोवस्थाद्यनुसारेण रुधिरं स्रावयेत् ॥

यावद्वर्णविपर्यासः स्रावयेत्तावदेव हि ॥ ८८ ॥

यावद्वर्णवैपरीत्यं तावद्रुधिरं स्राव्यम् ॥ ८८ ॥

रक्ताद्रोगपरीक्षाथ पैत्तिकं पीतवर्णकम् ।
कालिकासंनिभं चैव श्लेष्मलं पाण्डु पिच्छलम् ॥ ८९ ॥

---

82 = Aśvc 11.3. A वक्ष्यसि for वक्षसि. $B_1$ omits the prose. $AB_2D$ omit figure 82.

82. $B_2$ स्थनिषु for स्थानेषु. $B_2D$ omit figure 82 after the prose passage.

83 = Aśvc 11.5. $B_1$ प्राह for प्राहुः. $B_1$ तेषु for येषु. $AB_1D$ रक्त, $B_2$ रक्तः for रक्तं

84. $B_1$ पुछौ, $AB_2D$ पुछे for पुच्छे.

85. $AB_2D$ जिह्वायां चाधरे वोष्ठे for जिह्वायामधरे चौष्ठे. $B_1$ चोष्ठे for चौष्ठे. $AB_2D$ कर्णयोश्च मणिबन्धे for कर्णयोर्मणिबन्धे च.

86. $B_2$ संवक्ष्यामि for संप्रवक्ष्यामि.

87. $B_1D$ अर्द्ध for अर्ध. $AB_{1\cdot2}D$ पुछा° for पुच्छा°. $B_1$ मेंढ्रतः for मेढ्रतः. $B_2$ यञ्च° for पञ्च°.

88. $B_1$ omits the prose. $AB_2D$ रोगकालं for रोगकाल°. B. स्रावयेतावदेव for स्रावयेत्तावदेव. $B_1$ omits the prose. $AB_2$ वैपरित्यं for वैपरीत्यं.

89. $B_{1\ 2}$ °परिक्षा for °परीक्षा. $B_2$ पैतिकं for पैत्तिकं. $AB_1$ संज्ञिभं for संनिभं. $AB._{1\cdot2}D$ पिछलं for पिच्छलं.

कफोद्भवं कर्बुरकं ज्ञेयं पित्तशिरागतम् ।
सर्ववर्णं विजानीयाच्छोणितं सांनिपातिकम् ॥ ९० ॥

एवं रक्तविशुद्धं च कृत्वा यत्नेन वाजिनम् ।
दद्याद्गोमूत्रसंपक्वां सतैलां च हरीतकीम् ॥ ९१ ॥

अमुना रक्तं विशोध्य गोमूत्रेण पाचितां हरीतकीं तैलेन सह दद्यात् ।

नित्यं त्रिसप्तकं यावत्पलपञ्च प्रमाणतः ।

हरीतकीं कियन्ति दिनानि कियन्मात्रां च दद्यादित्याह नित्यमिति । पञ्चपलमिता हरीतकी गोमूत्रविपक्वास्य देया । यावद्दिनानां त्रीणि सप्तकानि, एकविंशतिदिनानीत्यर्थः ॥ ९१ ॥

[ इति रक्तमोक्षणम् ] ॥

॥ अथ ऋतुचर्या ॥

तत्र प्रथमं वर्षाकालचिकित्सा ॥

अथातः संप्रवक्ष्यामि ऋतुचर्यास्तु वाजिनाम् ।
न प्राज्ञो वाहयेदश्वं प्रावृट्काले कथंचन ॥ ९२ ॥

कूपोदकं समानीय पाययेद्गृह एव हि ।
अभ्यङ्गः कटुतैलेन निर्वातस्थानबन्धनम् ॥
एकाहान्तरिते दद्याल्लवणं च विचक्षणः ॥ ९३ ॥

॥ इति वर्षाकालचिकित्सा ॥

॥ अथ शरत्कालचिकित्सा ॥

ततः शरदमासाद्य बहुक्षीरसमन्वितम् ।
शस्तं क्षीरौदनं चैव पलाष्टपरिसंख्यया ॥ ९४ ॥

घृतं वा यदि वा तैलं पानं दद्याद्विचक्षणः ।
वाहयेच्च शनैर्नित्यं सर्वदोषप्रशान्तये ॥ ९५ ॥

---

90. $B_2$ पिति° for पित्त°. $B_2$ सर्ववर्णा for सर्ववर्णं. $AB_{1,2}D$ °छोणितं for °च्छोणितं. $B_{1-2}$ सान्निपातकं for सांनिपातिकं.

91 = Aśvc 11.20 and 21ab. A दद्या for दद्यात्. $B_2D$ गोमुत्र° for गोमूत्र°. $B_2$ हरीतकी for हरीतकीं. $B_1$ omits the prose. AD विशुद्धोध्य for विशोध्य. $B_2$ °मुत्रेण for °मूत्रेण. $B_2$ आहु(:) for आह. $B_2$ गोमुत्र° for गोमूत्र°. $AB_2D$ omit अथ ऋतुचर्या. $AB_2D$ omit तत्र. $B_1$ प्रथम for प्रथमं.

92 = Aśvc 11.23ab.

93 = Aśvc 11.24 and 25ab. $B_1$ omits एकाहान्तरिते दद्याल्लवणं च विचक्षणः. $B_1$ इति वर्षाकालः for इति वर्षाकालचिकित्सा.

94 = Aśvc 11.29 $AB_{1-2}D$ क्षीरोदनं for क्षीरौदनं.

95. $B_1$ घृतं for घृतं. $AB_2D$ शतैः for शनैः.

अथ वा क्वथितं दुग्धं पाययेच्च सशर्करम् ।
निशागमे विशेषेण चान्यन्मधुरवस्तु च ।। ९६ ।।

उदकं च लघु प्रोक्तं यवसक्तु(क्तूं)श्च दापयेत् ।
मुकुष्ठाः कोमलास्तत्र वारणीयाः प्रयत्नतः ।। ९७ ।।
घृतं विशेषतो दद्यादश्वानां प्राक्समृद्धये ।।

।। इति शरत्कालचिकित्सा ।।

।। अथ हेमन्तः [ °न्तकालचिकित्सा ] ।।

ततो हेमन्तमासाद्य निर्वाते बन्धयेद्धयान् ।
माषोत्थं यवसं दद्यात्पानीयं च यथेच्छया ।। ९८ ।।

घृतं वा यदि वा तैलं पानं दद्याद्विचक्षणः ।
वाहयेच्च शनैर्नित्यं सर्वदोषप्रशान्तये ।। ९९ ।।

।। इति हेमन्तः [ °न्तकालचिकित्सा ] ।।

।। अथ शिशिरः [ °रकालचिकित्सा ] ।।

ततः शिशिरमासाद्य दद्यात्तैलं च वाजिनाम् ।
पलाष्टकप्रमाणेन यावद्दिनात्रिसप्तकम् ।। १०० ।।

यवोत्थं यवसं दद्यादेकविंशत्यहानि च ।
यवाभावे तु चणकान्दद्यादश्वेषु नित्यशः ।। १०१ ।।

यवाभावे मसूरांश्च शुष्कार्द्रांस्तैलसंयुतान् ।
यवसं वा तदुत्थं तैर्नीरोगो जायते हयः ।। १०२ ।।

औषधानां च सर्वेषां क्वाथानां नस्यकर्मणाम् ।
तैलानां च घृतानां च यवसं यवसंभवम् ।। १०३ ।।

---

97. $AB_{1\cdot2}D$ मुकुष्ठा for मुकुष्ठाः. $AB_2D$ दद्यात् अश्वानां for दद्यादश्वानां.

98 = Aśvc 11.7. $B_2D$ हयात् for हयान्. $AB_{1\cdot2}D$ माषोत्थ for माषोत्थं $AB_{1\cdot2}D$ यथेछया for यथेच्छया.

99 = Aśvc 11.8 ( cf. stanza 95 ). $AB_2D$ शतैः for शनैः.

100 = Aśvc 11.9. $B_2$ °तैलं for °त्तैलं.

101 = Aśvc 11.10. $AB_{1\ 2}D$ यवोत्थ° for यवोत्थं.

102 = Aśvc 10.11. $AB_{1\ 2}D$ शुष्कार्द्रान् तैल° for शुष्कार्द्रास्तैल°.

103 = Aśvc 11.12. $AB_2D$ तस्य° for नस्य°. $B_1$ घृतानां for घृतानां.

पर्वतानां यथा मेरुरायुधानां च वज्रकम् ।
तथा सर्वोपचर्याणां सप्तेः श्रेष्ठा यवाः स्मृताः ।। १०४ ।।

यथोदितो दिनमणिर्निःशेषं तिमिरं हरेत् ।
तथा शरीरजान्दोषान्यवाः सप्तेर्हरन्ति वै ।। १०५ ।।

यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
अक्रियापि क्रिया जाता पञ्चर्तुजनिता हये ।। १०६ ।।

परीक्षाग्निर्यथा हेम्नः स्नेहस्य च प्रतिक्रिया ।
हयस्यापि च तद्वच्च परीक्षा यवभक्षणे ।। १०७ ।।

अल्पेनापि हि छिद्रेण यथा नश्यति नौर्जले ।
सर्वे दोषाः प्रणश्यन्ति स्तोकैरपि यवैर्हये ।। १०८ ।।

इति ज्ञात्वा प्रयत्नेन यवान्दद्यात्तु वाजिषु ।
प्राणदास्ते यतो ज्ञेयाः सर्वव्याधिविनाशकाः ।। १०९ ।।

अश्वोऽश्नाति यवानार्द्रान्शुष्कान्वा स्वेच्छया सदा ।
न तस्य जायते रोगो यवभक्षप्रभावतः ।। ११० ।।

न विशुचिर्विशूलं च न च प्लीहा न च क्रमिः ।
न च रक्तप्रकोपश्च न च वातादिधातवः।। १११ ।।

योऽश्नाति यवसं यावद्धयः शिशिर आगते ।
मुकुष्टभोजने वाजी पुष्टिं शरदि गच्छति ।। ११२ ।।
अप्राप्तौ तु मुकुष्टानां मुद्गा देया विवेकिना ।। ११२ ।।

।। इति शिशिरः [ °रकालचिकित्सा ] ।।

---

104 = Aśvc 11.13. $AB_2D$ सर्वेपि चर्याणां, $B_1$ सर्वेषु चर्येषु for सर्वोपचर्याणां. $B_2$ सत्येः for सप्तेः.

105 = Aśvc 11.15.

106 = Aśvc 11.17. $B_2$ शरिरे for शिशिरे.

107 = Aśvc 11.32. $AB_{1\cdot2}$ परिक्षा for परीक्षा. $B_1$ अग्नेः for अग्निः. $AB_2D$ यथो for यथा. A परिक्षा for परीक्षा.

108 = Aśvc 11.34.

109 = Aśvc 11.35ab and 36cd. $B_2$ दद्यातु for दद्यात्तु.

110 = Aśvc 11.37.

111 = Aśvc 11.38. $B_1$ omits this stanza. $AB_2D$ प्लीहो for प्लीहा. $B_2$ क्रमी for क्रमिः. $AB_2D$ वावादि° for वातादि°. $B_2$ reads the second line as first.

112 $AB_2D$ यावं for यावत्. $AB_{1\cdot2}D$ गछति for गच्छति.

112ef = Aśvc 11.42ab.

॥ अथ वसन्तः [ °न्तकालचिकित्सा ] ॥

ऋतौ वसन्ते संप्राप्ते वाहयेत्सततं हयम् ।
सनिम्बलवणं दद्यात्तैलं लवणमेव च ॥ ११३ ॥

वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहप्रणाशः स्यादालस्यं जायते तथा ॥ ११४ ॥

तस्मात्सर्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥

॥ इति वसन्तः [ °न्तकालचिकित्सा ] ॥

॥ अथ ग्रीष्मर्तुः [ ग्रीष्मकालचिकित्सा ] ॥

ग्रीष्मकाले तु संप्राप्ते पूर्वं(दूर्वा)भोज्यं प्रशस्यते ।
वाजिनामिह सर्वेषां घर्मतापोपशान्तये ॥ ११५ ॥

घृतपानं विशेषेण सुच्छायासु निबन्धनम् ।
रक्तस्रावश्च गात्रेषु घासं वा घृतसंयुतम् ॥ ११६ ॥

पुनश्च पायेत्तोयानि शीतलानि च वाजिनः ॥ ११७ ॥

[ इति ग्रीष्मकालचिकित्सा ] ॥

॥ इति षट् ऋतवः ॥ [ इति ऋतुचर्या ] ॥

[ अथ नस्यः ] ॥

पिप्पली सैन्धवं चैव नागरं च गुडान्वितम् ।
प्रातर्दत्तं तुरङ्गाणां नस्यं श्लेष्मविनाशनम् ॥ ११८ ॥

नस्यं पर्युषितं तोयैः प्रातर्दत्तं च केवलम् ।
अश्वानां च नराणां च चाक्षुष्यं बलवर्धनम् ॥ ११९ ॥

---

113 = Aśvc 11.50. $B_2$ सम्बिष° for सनिम्ब°.
114 = Aśvc 11.52. A °त्साहः for °त्साह°. $AB_2D$ स्यात् आलस्यं for स्यादालस्यं.
114ef = Aśvc 11.53cd. $AB_{1\cdot2}D$ ग्रीष्मर्त्तुः for ग्रीष्मर्तुः.
115 = Aśvc 11.54. $B_2$ घर्म° for घर्म°.
116 = Aśvc 11.55. $AB_{1\cdot2}D$ सुछायासु for सुच्छायासु. $B_1$ °श्राव: for °स्राव:. $B_1$ धृत° for घृत°. $AB_2D$ तोयानि पायेत् for पायेत्तोयानि.
117. $B_1$ षड्रतवः for षट् ऋतवः.
118 = Aśvc 12 2. $AB_2$ पिप्पलि, $B_1$ पिःपली, D पिष्पली for पिप्पली. $B_2$ दत्तं A द्त्तं. for दत्तं.
119 = Aśvc 12.13. A द्त्तं for दत्तं. A वलवर्द्धनं, $B_{1\cdot2}D$ बलवर्द्धनं for बलवर्धनं.

द्विपञ्चाशत्प्रमाणेन श्रेष्ठं तन्नस्यमुच्यते ।
पादोनं मध्यमं तत्र षड्विंशत्यथ वाधमम् ॥ १२० ॥

माक्षिकं शर्करामिश्रं चन्दनं केसराणि च ।
नस्योऽयं वारिणा सद्यः पित्तनाशकरो मतः ॥ १२१ ॥

शुण्ठी मुस्ता ग( गु )डूची च तगरं सितसर्षपाः ।
संनिपाते कफाधिक्ये नस्यं समैः सुखप्रदम् ॥ १२२ ॥

[ इति नस्यः ] ॥

[ अथ पिण्डः ] ॥

कङ्कोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तोऽयं सघृतः पिण्डः पुष्टिं नयति वाजिनाम् ॥ १२३ ॥

मत्स्यमांसेन संयुक्तं माषचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्धनः ॥ १२४ ॥

त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्तिनुत् ॥ १२५ ॥

सैन्धवं नागरं श्यामा ग( गु )डूची चित्रसर्षपाः ।
तथाम्लवेतसं समैः पिण्डोऽयं शूलनाशनः ॥ १२६ ॥

सौवर्चलं हरिद्रा च पिप्पली चेन्द्रवारुणिः ।
मूत्रकृच्छ्रे प्रशंसन्ति पिण्डोऽयं वाजिनां हितः ॥ १२७ ॥

केसरं पद्मतालं च श्रीपर्णी बदरीफलम् ।
कृत्वैकत्र हये दत्तः पिण्डोऽयं विषनाशनः ॥ १२८ ॥

[ इति पिण्डः ] ॥

= Aśvc 12.17. A पादौनं for पादोनं. $B_2$ अथवा for अथ वा.

= Aśvc 12.23.

Aśvc 12.24.
$B_1$ सन्निपाते, $B_2$ सनिपाते for संनिपाते. $B_1$ कफादित्ये for कफाधिक्ये. D सुखप्रदः for सुखप्रदं.

= Aśvc 13.4.

2

124 = Aśvc 13.5. A भासेन for °मांसेन. $AB_{1,2}$ D बलवर्द्धनः for बलवर्धनः.

125 = Aśvc 12.9. A चीत्रकं for चित्रकं. $AB_2$ D आर्त्तिनुत् for आर्तिनुत्.

126 = Aśvc 12.11.

127 = Aśvc 13.30. $B_1$ (after corr.) $B_2$ चन्द्र° for चेन्द्र.° $AB_{1,2}$ D °कृच्छ्रे for °कृच्छ्रे.

128 = Aśvc 16.7.

नृपवेश्मान्तपूर्वगे शुभदिवसे कारयेद्धयागारम् ।
सुदृढं च सुविस्तीर्णं वास्तुग्रन्थोदितान्मानात् ॥

अत ऊर्ध्वं हुत्वाग्निं प्रवेशयेद्वाजिनो यथायोगम् ।
कुशलैस्तरुणैर्दाक्षैरनुपालैः स्थानपालैश्च ॥

कृतमङ्गलसंस्कारा बद्धव्यास्तेऽप्युत्तराभिमुखाः ॥ १२९ ॥

वामैश्च पादैरभिताडयन्तो भुवं प्रवासाय भवन्ति पत्युः ।
सन्ध्यासु दीनं ह्यवलोकयन्तो हेषन्ति ते बन्धुपराभवाय ॥ १३० ॥

मुहुर्मुहुर्मूत्रशकृत्करोति
न ताड्यमानोऽप्यनुलोमयायी ।
अकार्यभीतोऽश्रुविलोचनश्च
शिवं न भर्तुस्तुरगोऽभिधत्ते ॥ १३१ ॥

वर्षासु लवणं देयं निम्बपत्रेण संयुतम् ।
निर्गुण्ड्या च समायुक्तं शिशिरे लवणं हितम् ॥ १३२ ॥

शरद्युष्णे च काले च स्वल्पं दद्याद्घृतान्वितम् ।
कटुचूर्णसमायुक्तं वसन्ते समुदाहृतम् ॥ १३३ ॥

शुण्ठी कृष्णाजीरके द्वे मेथिका च वचा तथा ।
शतपुष्पाजमोदा च राजिका सर्षपास्तथा ॥ १३४ ॥

कटुकातिविषा निम्बो वत्सकश्च विडङ्गकम् ।
एतानि समभागानि कृत्वैकत्र प्रयोजयेत् ॥ १३५ ॥

लशुनं दशभागाश्च सौवीरं मथितं घृतम् ।
तैलद्वयमजामांसं कृत्वैकत्र प्रयोजयेत् ॥ १३६ ॥

---

129a = Aśvc 18.1ab.

129cd = Aśvc 18.4. $AB_2$ D अत्त for अत. $AB_{1\cdot2}$ उर्व्वं for ऊर्ध्वं. In all Mss. 129c ends with प्रवेशयेत् and wrongly split up into parts as ॥ वाजिनो यथा ॥ योगं is taken with कुशलैः in the next line. AD बत्ध° for बद्ध°.

131. $B_2$ नाताड्य° for न ताड्य°. $AB_{1\cdot2}$ D °प्यनुलोचनश्च for °श्रुविलोचनश्च. $B_1$ शिवन्न for शिवं न. A भर्त्तुः for भर्तुः. $B_2$ अभिधते for अभिधत्ते.

132. $B_2$ संकतं for संयुतं.

133. $AB_2D$ शरदुष्णे for शरद्युष्णे. $AB_2$ D दद्यात् घृता° for दद्याद्घृता°.

134. A सुण्ठी, $B_2D$ सुठी for शुण्ठी.

ससैन्धवम्

एषा विजलिका नाम हयानां परमौषधम् ।
कृशाङ्गानां सदा देयं हन्ति कोष्ठगतान्क्रमीन् ॥ १३७ ॥

महाबलो महोत्साहो व्याधिहीनो भवेद्धयः ।
बलं प्रवर्धते तेषां ये च वृद्धाश्च वाजिनः ॥ १३८ ॥

शुण्ठी, पिंपरी, जिरें, मेथी, वेखण्ड, शौपा, अजमोदा, मोहऱ्या, सर्षप, कडू, अतिविष, लिंब, इन्द्रजव, विडङ्ग–इमान्यौषधानि समभागानि । लशुनस्य दश भागाः । काञ्जिकघृतकटुतैलतिलसैन्धवयुक्तमजामांसमेकत्र कुट्टयित्वा सरसभाण्डे निक्षिप्य धान्यभृत्कोष्ठिकायां दश दिनानि स्थापयेत् । पश्चात्पिण्डो देयः । चतुरा(र)शीतिवातानां निर्नाशं करोति । पित्तश्लेष्माग्निमान्द्यादिदोषान्नाशयेत् बलपुष्टिं च करोति ॥

## ॥ इति श्रीभोजराजविरचितं शालिहोत्रं समाप्तम् ॥

---

137. $AB_2D$ कृशाङ्गनां for कृशाङ्गानां. $B_{1\cdot2}$ कृमीन् for क्रमीन्.

138. $B_2$ भवेत्धयः for भवेद्धयः. $AB_2D$ प्रवर्द्धते for प्रवर्धते. $B_1$ omits the prose. A पींपरि, $B_2$ पप्परी, D पिपरि for पिंपरी. A वेषण्ड for वेखण्ड. $B_2$ अजमोद for अजमोदा. $B_2$ कटू for कडू. $B_2$ अतविष for अतिविष. $B_2$ दशं भागः for दशभागाः. A omits °तिल°. A °राशिति° for °राशीति°. $B_2$ °पुष्ठि for °पुष्टि. A omits च.

A इति भोजराजविरचितं शालिहोत्रं समाप्तम् । शुभमस्तु । कल्याणमस्तु । संवत् १८६४ शके १७३० प्रवर्त्त(र्त)मान्ये(ने) आषाढमासे कृष्णपक्षे प्रतिपदायां भृगुवासरान्वितायां पुस्तकमिदं शालिहोत्राभिधानं समाप्तमिति । श्रीप्रसं(स)न्नोऽस्तु ॥

$B_1$ इति श्रीभोजराजविरचिते शालिहोत्राश्वपरीक्षापुस्तकं समाप्तम् ॥ छ ॥ संवत् १९१३ फालगु(ल्गु)न शुक्ल ७ भौमवासरे सुकर्वात्युपनाम्ना लक्ष्मणसुते गोपाले नारदी ॥ शक १७७८ ॥ छ ॥

$B_2$ इति श्रीभोजराजविरचिते शालिहोत्र(त्रं) अश्वपरि(री)क्षापुस्तक(कं) समाप्त(प्तं) ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

D इति भोजराजविरचिते शालिहोत्र(त्रं) अश्वपरीक्षाचे(क्षायाः) पुस्तक(कं) समाप्ताः (प्तं) ॥ शुभं भवतु ॥ कल्याणमस्तु ॥ श्रीरस्तु ॥ ग्रन्थ(न्थः) समाप्तोऽयम् ॥ ठ ॥ श्री ॥

# APPENDIX I

This appendix contains a comparison of Śālihotra Text with the text of Aśvacikitsita of Nakula. The variant readings as found in Yuktikalpataru[1] and the Mss. utilized for the edition of Yuktikalpataru and the readings given in the foot-notes of Aśvacikitsita text,[2] are recorded in the foot-notes to facilitate the comparative study of the three texts ( for the detailed study of this appendix, see the introduction ).

| शालिहोत्र | अश्वचिकित्सित |
|---|---|
| सितो रक्तस्तथा पीतः<br>सारङ्गः पिङ्ग एव च ।<br>नील कृष्णोऽथ सर्वेषां<br>श्वेतः श्रेष्ठतमः स्मृतः[1] ॥ 1 | सितो रक्तस्तथा पीतः<br>सारङ्गः पिङ्ग एव च ।<br>नीलः कृष्णोऽथ सर्वेषां<br>श्वेतः श्रेष्ठतमः स्मृतः ॥ 3.2 |
| श्वेतः कपिलकाकारो[2]<br>नीलो दूर्वाग्रसंनिभः[3] ।<br>कृष्णो जम्बुफलाकारः<br>शास्त्रज्ञैः समुदाहृतः ॥ 2 | पिङ्गः कपिलकाकारो<br>नीलो दूर्वाग्रसंनिभः ।<br>कृष्णो जम्बूफलाकारः<br>शास्त्रज्ञैः समुदाहृतः ॥ 3.5 |
| श्वेताभः श्वेतपादश्च<br>तथा स्याच्छ्वेतलोचनः[4] ।<br>चक्रवाकः स विज्ञेयो<br>राजार्हो वाजिसत्तमः[5] ॥ 3 | पीताभः श्वेतपादो य-<br>स्तथा स्यात्सितलोचनः ।<br>चक्रवाकः स विज्ञेयो<br>राजार्हो वाजिसत्तमः ॥ 3.6 |
| सर्वश्वेतो हयो यस्तु<br>भवेच्छ्यामैककर्णकः[6] ।<br>स वाजी राजयोग्यः स्या-[8]<br>च्छ्यामकर्णः प्रकीर्तितः[9] ॥ 4 | सर्वश्वेतो हयो यस्तु<br>भवेन्मेचकवर्णकः[7] ।<br>स वाजी वाजिमेधार्हः<br>श्यामकर्णः प्रकीर्तितः ॥ 3.7 |

1. Edited by Pt. Īśvara candra Śāstrī. 1917.
2. An appendix to Aśva-Vaidyaka edited by Umeśacandra Gupta Kaviratna, Bibliotheca Indica Series, 1887.

1. यु. क.–मतः ।
2. यु. क.–पिश(ष)ङ्गः कपिलाकारो.
3. यु. क.–दूर्वादलप्रभः ।
4. यु. क.–पीताङ्गः श्वेतपादो यो यश्च स्यात्सित-लोचनः ।
5. यु. क.–प्रियसत्तमः ।
6. श्यामैकश्रवणो भवेत् ।
7. अश्व. ख–श्यामैककर्णकः ।
8. यु. क.–वाजिमेधार्हः ।
9. यु. क.–सुदुर्लभः ।

चत्वारोऽप्यसिताः पादाः
सर्ववर्णस्य[10] वाजिनः ।
अयोग्यो भूपतेर्नित्यं
यमरूपः प्रकीर्तितः[11] ॥ 5

यस्य पादाः सिताः सर्वे
पुच्छं वक्षस्तथैव च[12] ।
मूर्धा भालं सितं यस्य[13]
तं विद्यादष्टमङ्गलम् ॥ 6

यस्य पादाः सिताः सर्वे
तथा वक्त्रे च मध्यमः [14] ।
कल्याणपञ्चकः प्रोक्तः
सर्वकल्याणकारकः[15] ॥ 7

नासिकाग्रे ललाटाग्रे
शङ्खे कण्ठे च मस्तके ।
आवर्ता यस्य जायन्ते
धन्यः स तुरगोत्तमः[16] ॥ 8

हृदि[17] स्कन्धे गले चैव
कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वान्ते[18]
मध्यमास्ते प्रकीर्तिताः[19] ॥ 9

ललाटेऽश्वस्य चावर्तो
यस्यैकः संप्रजायते ।
स करोत्यश्वसंघातान्
स्वामिनः सूर्यसंज्ञिकः ॥ 10

त्रयो यस्य ललाटस्था
आवर्ता अधरोत्तराः ।

चत्वारोऽप्यसिताः पादाः
सर्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो
यमदूतः सुदूरतः ॥ 3.9

यस्य पादाः सिताः सर्वे
पुच्छं वक्षो मुखं तथा ।
मूर्धजाश्च सिता यस्य
तं विद्यादष्टमङ्गलम् ॥ 3.10

यस्य पादाः सिताः सर्वे
तथा वक्त्रं च मध्यतः ।
कल्याणपञ्चकः प्रोक्तः
सर्वकल्याणकृच्च सः ॥ 3.13

नासिकाग्रे ललाटाग्रे
शङ्खे कण्ठे च मस्तके ।
आवर्तो जायते येषां
ते धन्यास्तुरगोत्तमाः ॥ 4.4

हृदि स्कन्धे गले चैव
कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाङ्गे
मध्यमास्ते प्रकीर्तिताः ॥ 4.5

पृष्ठवंशे तथावर्तो
यस्यैकः संप्रजायते ।
स करोत्यश्वसंघातान्
स्वामिनः सूर्यसंज्ञकः ॥ 4.7

त्रयो यस्य ललाटस्था
आवर्ता अधरोत्तराः ।

---

10. यु. क.–सर्वश्वेतस्य ।
11. यु. क.–भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ।
12. यु. क.–पुच्छो मुष्को मुखं तथा ।
13. यु. क.–मूर्धजास्तु सिता यस्य ।
14. यु. क.–चन्द्रकं च ललाटके ।
15. यु. क.–भर्तुः कल्याणकारकः ।
16. यु. क.–आवर्तो जायते येषां ते धन्यास्तु तुरंगमाः ।
17. यु. क.–हृति ।
18. यु. क.–पार्श्वांशे ( से ) ।
19. यु. क.–मध्यमः स प्रकीर्तितः ।

षट्पदाभो[43] भवेद्यस्तु
कृष्णतालुर्न दुष्यति ॥ 24

चन्द्रादित्यौ ललाटस्थौ
नृपाणां जयवर्धनौ ॥ 25

सप्तविंशप्रमाणेन
मुखमश्वस्य शस्यते[44] ।
कर्णौ षडङ्गुलौ प्रोक्तौ
तालुकं[45] चतुरङ्गुलम् ॥ 28

सप्तविंशतिसप्ताढ्यः
स्कन्धश्च परिकीर्तितः ।
पृष्ठवंशे चतुर्विंशत्
सप्तविंशत्तथा कटी[47] ॥ 29

अतिसूक्ष्मं[48] तथा निम्नं
पुच्छं हस्तद्वयोन्मितम्[49] ।
लिङ्गं हस्तप्रमाणं तु
तथाण्डौ चतुरङ्गुलौ ॥ 30

स्कन्धस्थानं चतुर्विंश-
द्धृदयं षोडशोन्मितम्[52] ।
कटिकक्षान्तरं प्रोक्तं
चत्वारिंशत्प्रमाणतः ॥ 31

मणिबन्धद्वयं चैव
खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो
दैर्घ्ये च द्विशतद्वयम्[54] ॥ 32

षट्पदाभो भवेद्यश्च
कृष्णतालुर्न दुष्यति । 4.33 ab

ललाटे युगलावर्तौ
चन्द्रार्कौ संप्रकीर्तितौ ।
वाजिनो यदि तौ स्यातां
राष्ट्रवृद्धिकरौ परौ ॥ 4 11

सप्तविंशप्रमाणेन
मुखमश्वस्य शस्यते ।
कर्णौ षडङ्गुलौ प्रोक्तौ
तालुकं चतुरङ्गुलम् ॥ 6.7

चत्वारिंशच्च सप्ताढ्याः
स्कन्धाः सम्यक्प्रकीर्तिताः[46] ।
पृष्ठवंशश्चतुर्विंशा
सप्तविंशा तथा कटी ॥ 6.8

अतिसूक्ष्मं तथा निम्नं
पुच्छं हस्तद्वयायतम्[50] ।
लिङ्गं हस्तप्रमाणं च
तथाण्डौ चतुरङ्गुलौ ॥ 6.9

मार्ग[51]स्थानं चतुर्विंशं
हृदयं षोडशाङ्गुलम् ।
कटिकक्षान्तरं चोक्तं
चत्वारिंश[53] त्प्रमाणतः ॥ 6.10

मणिबन्धद्वयं चैव
खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो
दैर्घ्यं च ह्यधिकं शतम् ॥

43. यु. क.–विषदन्तो.
44. यु. क.–सप्तविंशत्यङ्गुलीभिर्मुखमानं विधीयते ।
45. यु. क.–भालकं ।
46. अश्व. ख–संपरिकीर्तिताः ।
47. यु. क.–चत्वारिंशच्च सप्ताढ्यः (ग-सप्ताढ्या) स्कन्धः संपरिकीर्तितः । पृष्ठवंशश्चतुर्विंशः सप्तविंशा तथा कटी ॥
48. यु. क.–इति सूक्ष्मं ।
49. यु. क.–प्रतिपुच्छं द्वयाधिकम् ।
50. अश्व. ख–पुच्छं हस्तार्धमायतं ।
51. अश्व. क–साङ्गं ।
52. यु. क–(मध्य क–माकु)स्थानं चतुर्विंशं हृदयं षोडशात्मकं ।
53. अश्व. ख–चतुर्विंशत् ।
54. यु. क.–अशीत्यङ्गुलिकाः पादा दीर्घा विंशाधिका मताः ।

| | |
|---|---|
| एतत्क्रमेण गात्रस्य<br>प्रमाणं वाजिनामिति ॥ L.101 | एवं क्रमेण गात्रस्य<br>प्रमाणं वाजिनां मतम् ॥ 6.11 |
| आस्यं भुजौ केशकृकाटिकाश्च[55]<br>दीर्घं चतुष्कं तुरगस्य शस्तम् ।<br>तथोन्नते घ्राणपुटं ललाटं[56]<br>शफाश्च तज्ज्ञाश्चरणा वदन्ति[57] ॥ 33 | आस्यं भुजौ केशकृकाटिकाश्च<br>दीर्घं चतुष्कं तुरगस्य शस्तम् ।<br>तथोन्नते घ्राणपुटे ललाटे<br>शफाश्च तज्ज्ञाश्चरणौ वदन्ति ॥ 6.14 |
| ओष्ठौ च जिह्वा त्वथ तालुकं च<br>मेढ्रं च रक्तं शुभदं हयस्य ।<br>लघूनि बन्धाश्च मणेस्तु कोष्ठं<br>श्रोत्राणि सर्वाणि तथैव पुच्छम् ॥ 34 | ओष्ठौ च जिह्वाप्यथ तालुकं च<br>मेढ्रं सुरक्तं शुभदं हयस्य ।<br>लघूनिबन्धाश्चरणेषु कोष्ठं<br>श्रोत्राणि सर्वाणि तथैव पुच्छम् ॥ 6.15 |
| गुणानामिह सर्वेषां<br>गुणो वेगो मयोदितः ।<br>तस्मात्सर्वप्रयत्नेन<br>वेगो वै वायुलक्षणम् ॥ 35 | गुणानामिह सर्वेषां<br>गुणो वेगमयोऽधिकः ॥ 7.1ab<br>तस्मात्सर्वप्रयत्नेन<br>वेगो ज्ञेयश्च वाजिनाम् ॥ 7.2cd |
| अवाहिता विनश्यन्ति<br>विनश्यन्त्यतिवाहिताः ।<br>अश्वानां वाहनं पथ्यं<br>सानुरागं च मोक्षणम् ॥ 36 | अवाहिता विनश्यन्ति<br>विनश्यन्त्यतिवाहिताः ।<br>अश्वानां वाहनं पथ्यं<br>सानुरागं च मोक्षणम् ॥ 7.3 |
| अधमा मध्यमास्ते तु<br>मध्यमाश्च तथोत्तमाः ।<br>उत्तमाश्चोत्तमा भूयो<br>वाह्यमानास्तुरंगमाः ॥ 37 | अधमा मध्यमास्ते स्यु-<br>र्मध्यमाश्च तथोत्तमाः ।<br>उत्तमाश्चोत्तमा भूयो<br>वाह्यमानास्तुरंगमाः ॥ 7.4 |
| आरोहणं हये श्रेष्ठं<br>तस्मिञ्श्रेष्ठं प्रतिष्ठितम् ।<br>आरोहणविहीनस्य<br>लक्षणं चाप्यलक्षणम् ॥ 38 | रूढमश्वविदां श्रेष्ठं<br>रूढे सर्वं प्रतिष्ठितम् ।<br>रूढेन तु विहीनस्य<br>लक्षणं चाप्यलक्षणम् ॥ 7.5 |
| रूपावर्ता गतिच्छाया<br>सत्त्वं वर्णः स्वरो बलम् । | रूपावर्तगतिच्छाया-<br>सत्त्ववर्णवयोबलम् । |

55. यु. क.–आस्यं भुजौ चापि कृकाटिका च ।
56. यु. क.–तथोन्नते घ्राणपुटे ललाटे ।
57. यु. क.–शफश्च( क-कफश्च )वाजिप्रवरस्य बोध्यः ।

जवहीनस्य वाहस्य
सर्वमेतन्निरर्थकम् ।। 40

गतेर्धन्यतरो वर्णो
वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्त्वं
सर्वं सत्त्वे प्रतिष्ठितम् ।। 41

लघुत्वं मातृदोषेण
पितृदोषेण जाड्यता ।
दौर्बल्यं स्वामिदोषेण
स्वदोषो नास्ति वाजिनः ।। 42

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनाम् ।
श्रुतं द्विजानां धनिनामगर्वता
पराक्रमः शस्त्रबलोपजीविनाम् ।। 43

वक्षौजैर्हरिणाधिपप्रतिनिभै-
र्व्याघ्रोपमैर्बाहुभि-
रावर्तैश्च शुभैः प्रधानकुलजाः
सुस्निग्धवर्णप्रभाः ।
उष्ट्राक्षाः प्रियदर्शनाश्च सुभगाः
श्वासैः सुगन्धैश्च ये
धन्यास्ते जयराज्यवित्तसुखदाः
संनाहिका भूपतेः ।। 44

ऊरू स्थिरौ[58] यस्य चलौ च पादौ
त्रिकोन्नतः सिंहसमानचित्तः[60] ।
स वाजिवाहः कथितः[62] पृथिव्यां
शेषा नरा भारवहा हि याने[63] ।। 45

जवहीनस्य वाहस्य
सर्वमेव निरर्थकम् ।। 6.6

गतेर्धन्यतरो वर्णो
वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्त्वं
सर्वं सत्त्वे प्रतिष्ठितम् ।। 7.7

लघुत्वं मातृदोषेण
पितृदोषेण जाड्यता ।
दौर्बल्यं स्वामिदोषेण
स्वदोषो नास्ति वाजिनाम् ।। 7.8

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ।। 7.9

वक्त्रे यो हरिणाधिपप्रतिनिभो
व्याघ्रोपमो बाहुभि-
रावर्तेऽश्वशुभैः प्रधानकुलजाः
सुस्निग्धवर्णप्रभाः ।
उष्ट्राक्षाः प्रियदर्शनाश्च सुभगाः
श्वासैः सुगन्धैश्च ये
धन्यास्ते जयराज्यवित्तसुखदाः
संवाहका भूपतेः ।। 7.13

ऊरू स्थिरौ[59] यस्य चलौ च पादौ
त्रिकोन्नतं संहतमासनं च[61] ।
स वाजिवाहः कथितः पृथिव्यां
शेषा नरा भारवहा[64] हयानाम् ।। 8.4

58. यु. क.–मेढ्रः स्थिरो यस्य ।
59. अश्व. क–उरः स्थिरं ।
60. यु. क.–त्रिकोन्नतं संहतमासनं च ।
61. अश्व. क–संहतमानसं च ।
62. यु. क.–प्रथितः ।
63. यु. क.–भारकरा हयानां ।
64. अश्व. क–भारकराः ।

कुपिते पुच्छसंस्थाने[65]
भ्रान्ते जानुद्वये[67] तथा ।
सर्वथा प्राप्तदण्डस्य
दण्डमेवं[69] निपातयेत् ॥ 46

अस्थाने ताडितो वाजी
बहून्दोषान्प्रकाशयेत्[70] ।
तावद्भवन्ति ते दोषा
यावज्जीवत्यसौ हयः ॥ 47

बाल्यो वृद्धस्तथा रोगी
दत्तस्नेहो महाबलः ॥ 48cd

सर्वातिरिक्तकोष्ठश्च
गुर्विणी न च वाहयेत्[73] ॥ 49ab

धनुरष्टादशं प्रोक्तं
वाजिनां मण्डलं क्रमात् ॥ 50cd

समं च विपुलं चैव
किंचित्पांशुसमन्वितम् ।
एकान्ते विजने चैव
रङ्गभूमिं हयं नयेत् ॥ 51

सार्द्रां च कठिनां चैव
पाषाणोदकगर्तकाम् ।
तृणकाष्ठसमायुक्तां
रङ्गभूमिं विवर्जयेत् ॥ 52
विण्मूत्रं कारयेदश्वं
क्रोशक्रोशद्वयान्तरे ।
उदकं पाययेत्कामाद्
घासमुष्टिं च जीर्यते ॥ 53

कुपिते पुच्छसंस्थाने[66]
भ्रान्ते जानुद्वयं तथा ।
सर्वथा[68] प्राप्तदण्डस्य
दण्डमेकं निपातयेत् ॥ 8.11

अस्थाने ताडितो वाजी
बहून्दोषान्प्रदर्शयेत्[71] ।
तावद्भवन्ति[72] ते दोषा
यावज्जीवत्यसौ हयः ॥ 8.13

बालो वृद्धः कृशो रोगी
दत्तस्नेहो महाबली ॥ 9.22 cd

पूर्णातिरिक्तकोष्ठं च
गुर्विणी न च वाहयेत् ॥ 9.23 ab

धनुरष्टादशे योज्यं
वाजिनां मण्डलं क्रमात्[74] ॥ 9.1 cd

समां च विपुलां चैव
किंचित्पांशुसमन्विताम् ॥ 9.23 cd
एकान्ते विजने चैव
रङ्गभूमिं हयं नयेत् ।

सान्द्रां चैव सुकठिनां
पाषाणोदकगर्तिकाम् ॥ 9.24
तृणकाष्ठसमायुक्तां
रङ्गभूमिं विवर्जयेत् ।
विण्मूत्रं कारयेदश्वं
क्रोशक्रोशद्वयान्तरे ॥ 9.25
वारि दद्याद्यथाकामं
घासं मुष्टिं च चारयेत् । 9.26 cd

---

65. यु. क.–पुच्छसंस्थानं ।
66. अश्व. क.–हेषते स्कन्धसंस्थानं ।
67. यु. क.–जानुद्वयं ।
68. अश्व. (?) सर्वस्य ।
69. यु. क.–दण्डमेकं ।
70. यु. क.–अस्थानदण्डपाताच्च बहुदोषः प्रजायते।
71. अश्व. क–बहुदोषः प्रजायते ।
72. अश्व. क–एते भवन्ति ।
73. यु. क.–बालं वृद्धं कृशं रुग्नं दत्तस्नेहं बृहद्वलिम् (ख–बालो वृद्धः कृशो रोगी दण्डस्नेहो बृहद्वलिः)। पूर्णातिरिक्तकोष्ठं च गुर्विणीं च न वाहयेत् ॥
74. अश्व. ख–वाजिनां मण्डलेन तु ।

रक्तपित्तविकारे च
दातव्यं शर्करोदकम् ।
जीवनं वातपित्तघ्नं
वृष्यं बलमलं ततः ॥ 54

क्षीरं घृतसमायुक्तं
वारि शीतं तुरंगमः ।
पीत्वा परित्यजेद्दोषान्
श्रमभाराध्वसंभवान् ॥ 55

सायं करैर्यं पृथिवी निहन्ति
हेषन्ति ये स्वामिमुखं निरीक्ष्य ।
प्रदक्षिणावर्तविकीर्णपुच्छा
जयावहास्ते समरे नृपाणाम् ॥ 56

आषाढसमये प्राप्ते
शिरामोक्षेण कृत्स्नशः ।
तस्मात्संशोधयेद्रक्तं
वाजिनो दोषसंभवम् ॥ 57

यदि रक्ताधिको वाजी
शष्पमश्नाति कर्हिचित् ।
रक्तात्संजायते पित्तं
पित्तान्नाशमवाप्नुयात् ॥ 58

रक्तपित्तप्रकोपेन
यदा संपीड्यते हयः ।
तदा कण्डूः समासाद्य
घर्षयेत्सततं वपुः ॥ 60

छायां वाञ्छति यत्नेन
विशेषेण जलाश्रयम् ।
मुहुर्वाञ्छति पानीयं
रक्तपित्तातुरो हयः ॥ 61

रक्तपित्तसमीरोत्थं
दातव्यं शर्करोदकम् ॥ 9.34 cd
जीवनं वातपित्तघ्नं
वृष्यं बल्यतमं ततः । 9.35 cd

स्वच्छाक्तं च घृतं क्षीरं
वारियुक्तं तुरंगमः ।
पीत्वा हि निर्हरेद्दोषान्
श्रमभाराध्वसंश्रवान् ॥ 9.36

संध्याङ्घ्रिघातेन महीं निहन्ति
हेषन्ति ये स्वामिमुखं निरीक्ष्य ।
प्रदक्षिणावर्तविकीर्णपुच्छा
जयावहास्ते समरे नृपाणाम् ॥ 9.39

आषाढसमये प्राप्ते
शिरामोक्षेण कृत्स्नशः[75] ॥ 10.3 cd
तेन संशोध्यते रक्तं[76]
वाजिनां दोषसंभवम् ॥ 10.4 cd

यदि[77] रक्ताधिको वाजी
सस्यमश्नाति[78] कर्हिचित् । 10.5 cd
रक्तात्संजायते पित्तं
ततो[79] नाशमवाप्नुयात् ॥ 10.6 cd

पित्तरक्तप्रकोपेण
यदा संपीड्यते हयः । 10.9 cd
तदा कण्डूतिमासाद्य
कषते सततं वपुः ।

छायां वाञ्छति यत्नेन
विशेषेण जलाश्रयम् ॥ 10.10
मुहुर्वाञ्छति पानीय-
माहारं च विशेषतः ॥ 10.11 cd

---

75. अश्व. क–शिरामोक्षं च कारयेत् ।
76. अश्व. ख–तस्मात्संशोधयेद्रक्तं ।
77. अश्व. क–ततो ।
78. अश्व. क–शस्यं नाश्नाति ।
79. अश्व. ख–पित्तात् ।

| | |
|---|---|
| शिरामोक्षं विधायास्य<br>दद्यात्त्रिकटुकं गुडम् ।<br>ततः शुद्धिमवाप्याथ<br>नीरोगः संप्रजायते ॥ 62 | शिरामोक्षं विधायैव<br>दद्यात्सकटुकं गुडम् ।<br>ततः शुद्धिमवाप्नोति<br>नीरोगः संप्रपद्यते ॥ 10. 12 |
| श्लेष्मरक्तप्रकोपेन<br>यदा संपीड्यते हयः ।<br>अधोवक्त्रो भवेन्नित्यं<br>कासते च मुहुर्मुहुः ॥ 63 | श्लेष्मरक्तप्रकोपेण<br>यदा संपीड्यते हयः ॥ 10 14 cd<br>अधोवक्त्रो भवेन्नित्यं<br>कासते च मुहुर्मुहुः । |
| आहारं न च गृह्णाति<br>नोत्साहं कुरुते यदा ।<br>नासाग्रेण क्षिपेत्तोयं<br>वह्निमातपमिच्छति ॥ 64 | आहारं न च गृह्णाति<br>नोत्साहं कुरुते क्वचित्[80] ॥ 10. 15<br>नासाग्रेण क्षिपेत्तोयं<br>व( ब )हिर्घर्म[81] च वाञ्छति ॥ 10.16 |
| शिरामोक्षं विधायास्य<br>दद्याच्छुण्ठया समन्वितम् ।<br>घृतं गुडसमायुक्तं<br>येनारोग्यं प्रपद्यते ॥ 65 | तस्यापि शोधयित्वासृग्<br>दद्याच्छुण्ठया युतं गुडम्[82] ।<br>सर्वं रक्तं ततः शुद्ध्वा<br>निःशेषं समवाप्न(प्नु)यात्[83] ॥ 10.17 |
| नेत्रप्रान्तेऽश्रुपातेन<br>कण्डूस्तस्योदरे मता ।<br>स हि मृत्युमवाप्नोति<br>षण्मासाभ्यन्तरे हयः ॥ 66 | नेत्रान्ते बिन्दुकाकार-<br>कण्डूस्तस्य तथोदरे ।<br>तदा मृत्युमवाप्नोति<br>षण्मासाभ्यन्तरे ध्रुवम् ॥ 10.18 |
| शुण्ठ्या युतं गोक्षुरकं घृतं च<br>श्यामावचाहिङ्गुयुता च यष्टिः ।<br>कफप्रणाशाय विनिर्मितोऽयं<br>पिण्डः प्रसिद्धश्च कफोदयेऽश्वे ॥ 67 | शुण्ठ्यामृता गोक्षुरकं घनं च<br>श्यामावचाहिङ्गुयुता च यष्टिः ।<br>कफप्रणाशाय विनिर्मितोऽयं<br>पिण्डः प्रसिद्धश्च कफापहश्च ॥ 10.19 |
| कुक्षिद्वये धृतं तीव्रं<br>मुहुः श्वासं च मुञ्चति ।<br>नैकत्र रमते स्थातुं<br>हेषते च निरर्गलम् ॥ 68 | कुक्षिद्वये हय[84]स्तीव्रं<br>मुहुः श्वासं प्रमुञ्चति । 10.20 cd<br>नैकत्र मन्यते[85] स्थातुं<br>हेषते च निरर्गलम् । 10.21 cd |

80. अश्व. ख–पथि ।
81. अश्व. ख–वाञ्छते वह्निमातपं ।
82. अश्व. क–समन्वितं ।
83. अश्व. ख–निःशेषाङ्गमवाप्नुयात् ।
84. अश्व. ख–कुक्षिद्वयग्रहः ।
85. अश्व. ख–रमते ।

संनिपातोऽथरक्तेन
यदा संपीड्यते हयः ।
तदा वेपथुमाप्नोति
कासते च निरर्गलम् ॥ 70

निद्रालस्याग्निमान्द्यानि
पुरीषं च मुहुः सृजेत् ।
कर्णयोः पतनं चैव
वक्त्रे लालाविमोक्षणम् ॥ 71

तदा संशोधयेद्रक्तं
ततो लङ्घनमर्हति ।
यावद्दोषस्य निर्नाशः
स्तोकोदककृताशनः ॥ 72

क्वचिदुष्णं क्वचिच्छीतं
क्वचिद्भेषजसंयुतम् ।
चिकित्सायुक्तितत्त्वज्ञै-
र्वारि वार्यं न कर्हिचित् ॥ 73

शिरीषं श्रीफलं वाम्ल-
वेतसं चैव वृद्धिभाक् ।
मन्दाग्निं वायुदोषं च
वाजिनां शमयेद्ध्रुवम् ॥ 74

नीलपीते च नेत्रान्ते
भवेतां वाजिनः क्वचित् ।
स निर्वाणमवाप्नोति
त्रिभिर्मासैरसंशयम्[91] ॥ 75

जिह्वायां जायते बिन्दु-
रकस्माद्यस्य[92] वाजिनः ।

संनिपातेऽथ[86] रक्तेन
यदा संपीड्यते हयः ॥ 10.25 cd
यदा[87] वेपथुमाप्नोति
काशते च निरर्गलम् ।

निद्रालस्याग्निमन्दत्वं
बस्तौ मलनिबन्धनम्[88] ॥ 10.26
कर्णयोः पातनं चैव
वक्त्रा[89]ल्लालाविमोक्षणम् ।

तत्रापि शोधयेद्रक्तं
ततो लङ्घनमर्हति ॥ 10.27
यावद्दोषस्य निर्णाशं
स्तोकोदककृताशनः ।

क्वचिदुष्णं क्वचिच्छीतं
क्वचिद्भेषजसंयुतम् ॥ 10.28
प्रदेयं युक्तितत्त्वज्ञै-
र्वारि वार्यं न कुत्रचित् ॥ 10.29 ab

शिरीषं श्रीफलं चैव
वेतसं चैव वृद्धिभाक् ॥ 10.30 cd
मन्दाग्नित्वं सदोषाणां
कुरुते भस्मसाद्द्रुतम् । 10.31 ab

नीले पीतेऽथ नेत्रान्ते
स्यातां चेद्वाजिनः क्वचित्[90] ।
स निर्वाणमवाप्नोति
त्रिभिर्मासैरसंशयम् ॥ 10.34

जिह्वायां जायते बिन्दु-
रकस्माद्यस्य वाजिनः ।

86. अश्व. ख–संनिपातेन रक्तेन ।
87. अश्व. ख–तदा ।
88. अश्व. क–ततो मलविशोधनं ।
89. अश्व. क–वक्त्रे ।
90. अश्व. क–नीलपीतेऽथ नेत्राणां स्यातां चेद्वाजिनः क्वचित् ।
91. यु. क.–नीलपीते च नेत्रान्ते त्रिभिर्मासैर्वपुः-क्षयः ।
92. यु. क.–यदि ।

| | |
|---|---|
| कृष्णस्तु जीवते मासं[93]<br>स वाजी नात्र संशयः ॥ 76 | कृच्छ्रं च जीवते मासं<br>स वाजी नात्र संशयः ॥ 10.36 |
| पञ्चभिर्नीलवर्णैश्च[94]<br>षड्भिर्वज्रनिभैस्तथा[95] ।<br>सप्तभिः पाटलाकारै-[97]<br>र्नवभिः पीतसंनिभैः[98] ॥ 77 | पञ्चभिर्नीलवर्णश्च<br>षड्भिर्वज्रसमाकृतिः[96] ।<br>सप्तभिः पाटलाकारो । 10.38 abc<br>नवभिश्च हरिद्राभो । 10.39 a |
| यस्य श्वासो भवेदुष्णः<br>शरीरं पुलकाङ्कितम्[99] ।<br>जिह्वा च कठिनाकारा[101]<br>मासषट्कं न जीवति[102] ॥ 78 | यस्य श्वासो भवेदुष्णः<br>शरीरं पुलकाङ्कितम्[100] ।<br>जिह्वा हिमकराकारा<br>मासषट्कं स जीवति ॥ 10.40 |
| यस्य नेत्रे हरिद्राभे<br>स्यातां वातादिभिस्तथा[103] ।<br>तस्यायुः सप्तमासाख्यं<br>मुनिभिः परिकीर्तितम्[104] ॥ 79 | यस्य नेत्रे हरिद्राभे<br>स्यातां पित्तार्दितस्य च ।<br>तस्यायुः सप्तमासाख्यं<br>मुनिभिः परिकीर्तितम् ॥ 10.45 |
| यस्यैकं लोचनं नीलं[105]<br>द्वितीयं रक्तसंनिभम् ।<br>वातपित्तार्दितो मासै-<br>र्नवभिर्मृत्युमृच्छति ॥ 80 | यस्यैकं लोचनं नीलं<br>द्वितीयं रक्तसंनिभम् ।<br>दृश्यते स च विज्ञेयः<br>पित्ताढयो मासजीवकः ॥ 10.47 |
| द्वि[106]सप्ततिसहस्राणि<br>नाडीनां संभवन्ति च[107] ।<br>वाजिनामिह सर्वेषां<br>यासु[108]रक्तं व्यवस्थितम् ॥ 81 | द्वासप्ततिसहस्राणि<br>नाडीनां हि भवन्ति च ।<br>वाजिनामिह सर्वेषां<br>वायुरक्तं व्यवस्थितम् ॥ 11.1 |
| तासां निर्मोचनार्थाय[109]<br>द्वाराण्यष्टौ वदाम्यहम् । 81 ef | तासां निर्मोचनार्थाय<br>द्वाराण्यष्टौ वदाम्यहम् । 11.2 c |

93. यु. क.–मासैकं जीवितं तत्र ।
94. यु. क.–नीलवर्णे च ।
95. यु. क–बभ्रु( क–वक्र )समाकृतौ ।
96. अश्व. क–वज्रसमप्रभः ।
97. यु. क.–पाटलाकारे ।
98. यु. क.–नवभिश्च हरिद्राभे ।
99. यु. क.–पुलकान्वितं( ख–पुलकाङ्कितं ) ।
100. अश्व. क–विपुलान्वितं ।
101. यु. क.–जिह्वा हि मलिनाकारा ।
102. यु. क.–मासषट्कं स जीवति ।
103. यु. क.–यस्य वातार्दितस्य च ।
104. यु. क.–तस्यायुः सप्तमासीयं बहुवर्णे तथा दिनैः ।
105. यु. क.–हीनं ।
106. यु. क.–द्वासप्तति° ।
107. यु. क.–हि ।
108. यु. क.–आशु ।
109. य. क.–निर्मोक्षणार्थाय ।

| | |
|---|---|
| कक्षे वक्षसि भाले च<br>नासयोस्तु मुखे तथा[110]।<br>अण्डयोरथ पादेषु<br>पार्श्वयोरुभयोरपि ॥ 82 | कण्ठे वक्षसि तालौ च<br>नासयोश्च मुखे तथा।<br>अण्डयोरथ पादेषु<br>पादयोरुभयोरपि ॥ 11.3 |
| अन्ये सप्तदश प्राहुः[111]<br>शिराद्वाराणि वाजिनः।<br>येषु रक्तं स्रुतं[112] सद्यः<br>करोति परमं सुखम्[113] ॥ 83 | अन्ये सप्तदश प्राहुः<br>शिराद्वाराणि वाजिनः।<br>विकारयुक्तं यद्रक्तं<br>सुस्वल्पमपि वर्जयेत् ॥ 11.5 |
| एवं रक्तविशुद्धं च<br>कृत्वा यत्नेन वाजिनम्।<br>दद्याद्गोमूत्रसंपक्वां<br>सतैलां च हरीतकीम् ॥ 91 | एवं रक्तविशुद्धानां<br>कृत्वा यत्नेन वाजिनाम्।<br>दद्याद्गोमूत्रसंयुक्तां<br>सतैलां च हरीतकीम् ॥ 11.20 |
| नित्यं त्रिसप्तकं यावत्<br>पलपञ्चप्रमाणतः। 91 ef | दिनं त्रिसप्तकं यावत्<br>पलपञ्चप्रमाणतः। 11.21 ab |
| न प्राशो वाहयेदश्वं[114]<br>प्रावृट्काले कथंचन। 92 cd | न प्रायो वाहयेदश्वं<br>प्रावृट्काले कथंचन। 11.23 ab |
| कूपोदकं समानीय<br>पाययेद्गृह एव हि।<br>अभ्यङ्गः कटुतैलेन<br>निर्वातस्थानबन्धनम् ॥ 93 abcd | कूपोदकं सदा शस्तं<br>पानाय जलदागमे।<br>अभ्यङ्गः कटुतैलेन<br>निर्वातस्थानबन्धनम् ॥ 11.24 |
| एकाह्नान्तरिते दद्या-<br>ल्लवणं च विचक्षणः[115]। 93 ef | एकाह्नान्तरितं दद्या-<br>ल्लवणं च विचक्षणः। 11.25 cd |
| ततः शरदमासाद्य<br>बहुक्षीरसमन्वितम्। | ततः शरदमासाद्य<br>बहुखण्डसमन्वितम्। |

110. यु. क.–कण्ठे कक्षे लोचनयोरंसयोश्च मुखे तथा।

111. यु. क.–अन्ये सप्तदशान्याहुः।

112. यु. क.–हृतं।

113. यु. क.–प्रकरोति ततः सुखं।

114. यु. क.–अश्वान्।

115. यु. क.–कूपोदकं कटुकतैलनिवात ( ह ) गेहं शस्तं पलार्धलवणं दिवसान्तरेण। तत्रान्यथा सति मुखामयवीर्यहानिर्मुख्यैर्बलैर्विरहितस्तु वयो( ख–रगो )विनश्येत्।

| | |
|---|---|
| शस्तं क्षीरौदनं चैव<br>पलाष्टपरिसंख्यया[116] ॥ 94 | शस्तं क्षारोदनं सत<br>पलाष्टपरिसंख्यया ॥ 11.29 |
| ततो हेमन्तमासाद्य<br>निर्वाते बन्धयेद्धयान् ।<br>माषोत्थं यवसं दद्यात्<br>पानीयं च यथेच्छया ॥ 98 | ततो हेमन्तमासाद्य<br>निवाते निबधेद्धयम्[117] ।<br>मासोत्थं यवसं दद्यात्<br>पानीयं च यथेच्छया ॥ 11.7 |
| घृतं वा यदि वा तैलं<br>पानं दद्याद्विचक्षणः ।<br>वाहयेच्च शनैर्नित्यं<br>सर्वदोषप्रशान्तये[119] ॥ 99 | घृतं वा यदि वा तैलं<br>पाने दद्याद्विचक्षणः ।<br>वाहयेच्च[118] शनैर्नित्यं<br>सर्वदोषप्रशान्तये ॥ 11.8 |
| ततः शिशिरमासाद्य<br>दद्यात्तैलं च वाजिनाम् ।<br>पलाष्टकप्रमाणेन<br>यावद्दिनत्रिसप्तकम्[120] ॥ 100 | ततः शिशिरमासाद्य<br>दद्यात्तैलं हि वाजिनाम् ।<br>पलाष्टकप्रमाणेन<br>यावद्दिनत्रिसप्तकम्[121] ॥ 11.9 |
| यवोत्थं यवसं दद्या-<br>देकविंशत्यहानि च ।<br>यवाभावे तु चणकान्<br>दद्यादश्वेषु नित्यशः ॥ 101 | यवोत्थं यवसं दद्या-[122]<br>देकविंशत्यहानि च ।<br>यवाभावेऽथ चणकान्<br>दद्यादार्द्रतरान्[123] सदा ॥ 11.10 |
| यवाभावे मसूरांश्च<br>शुष्कार्द्रास्तैलसंयुतान् ।<br>यवसं वा तदुत्थं तै-<br>र्नीरोगो जायते हयः ॥ 102 | तदभावे मसूरांश्च<br>शुष्कार्द्रास्तैलसंयुतान् ।<br>यवसं चापि तद्देयं[124]<br>नीरोगो जायते हयः ॥ 11.11 |

116. यु. क.–शरदि गुडघृतं( ग–युतं )पयः प्रशस्तं शरदि सिताष्टपलप्रमाणमच्छम् । मधुरमथ जलं सरोवरोत्थं घृतयुतनीलमुकुष्टकाश्च( घ–मुकुन्दकाश्च )भोज्याः ।

117. अश्व. क–अश्वं निबन्धयेत् ।

118. अश्व. क–वाहनं च ।

119. यु. क.–हेमन्तकाले घृततैलमाषा( षाः ), निर्वातसंस्था च पयो यथेच्छम् । शनैः शनैर्वाहनकर्म कुर्याद् यवांश्च पक्त्वा( च–मुक्त्वा ) वितरेद् विधिज्ञः ।

120. यु. क.–शिशिरे तैलपलाष्टकं कटिस्थं दिनसप्तावधि पाययेत् तुरङ्गान् । तदनु प्रातर्भोजयेद् यवांश्च यवयवसांश्च तथामृतस्वरूपान् ।

121. अश्व. क–भवेद्यावद्द्विसप्तकं ।

122. अश्व. क–पश्चाद्द्याद्विंशत्यहानि च ।

123. अश्व. क–आर्द्रान्वरान् ।

124. अश्व. क–यत्प्रोक्तं प्रविष्ये तदहं यदा ।

औषधानां च सर्वेषां
क्काथानां नस्यकर्मणाम् ।
तैलानां च घृतानां च
यवसं यवसंभवम् ॥ 103

पर्वतानां यथा मेरु-
रायुधानां च वज्रकम् ।
तथा सर्वोपचर्याणां
सप्तेः श्रेष्ठा यवाः स्मृताः ॥ 104

यथोदितो दिनमणि-
र्निःशेषं तिमिरं हरेत् ।
तथा शरीरजान्दोषान्
यवाः सप्तेर्हरन्ति वै ॥ 105

यस्य दत्ता यवा भोज्ये
शिशिरे समुपस्थिते ।
अक्रियापि क्रिया जाता
पञ्चर्तुजनिता हये[129] ॥ 106

परीक्षाग्निर्यथा हेम्नः
स्नेहस्य च प्रतिक्रिया ।
हयस्यापि च तद्वच्च
परीक्षा यवभक्षणे ॥ 107

अल्पेनापि हि छिद्रेण
यथा नश्यति नौर्जले ।
सर्वे दोषाः प्रणश्यन्ति
स्तोकैरपि यवैर्हये ॥ 108

इति ज्ञात्वा प्रयत्नेन
यवान्दद्यात्तु वाजिषु ।
प्राणदास्ते यतो ज्ञेयाः
सर्वव्याधिविनाशकाः ॥ 109

औषधानां च सर्वेषां
क्काथानां[125] नस्यकर्मणाम् ।
तैलानां च घृतानां च
यवस्य यवसं परम् ॥ 11.12

पव(र्व)तानां यथा मेरु-
रायुधानां च वज्रकम् ।
तथा सर्वोपचाराणां
सप्तेः श्रेष्ठतमा[126] यवाः ॥ 11.13

यथोदितः सहस्रांशु-
र्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान्दोषान्[127]
यवाः सप्तेर्हरन्ति च ॥ 11.15

यस्य दत्ता यवा भोज्ये
शिशिरे समुपस्थिते ।
अकृतापि कृता सर्वा[128]
पञ्चर्तुजनिता हये ॥ 11.17

परीक्षाग्नौ यथा हेम्नः
स्नेहस्य च प्रतिक्रिया ।
हयजीवस्य तद्वच्च
परीक्षा यवभक्षणे ॥ 11.32

अल्पेनापि हि छिद्रेण
यथा नश्यति नौर्जले ।
स्वल्पेनापि हि दोषेण
यवदोषांस्तथैव च ॥ 11.34

एवं ज्ञात्वा विदग्धेन
यवा देयाः प्रयत्नतः । 11.35 cd
प्राणदास्ते ततो[130] ज्ञेयाः
सर्वव्याधिविनाशनाः ॥ 11.36 cd

125. अश्व. क-क्काथ्यतां ।
126. अश्व. क-श्रेष्ठोत्तमाः ।
127. अश्व. क-सर्वान् ।
128. अश्व. क-क्रिया अपि कृताः सर्वाः ।
129. शु. क.-यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते । अकृत्वापि क्रियाः सर्वाः स हयः सुखमृच्छति ।
130. अश्व. क-यतः ।

| | |
|---|---|
| अश्वोऽश्नाति यवानार्द्रान्<br>शुष्कान्वा स्वेच्छया सदा ।<br>न तस्य जायते रोगो<br>यवभक्षप्रभावतः ॥ 110 | यश्चाश्नाति यवानाशु<br>शुष्कांश्च स्वेच्छया सदा ।<br>न तस्य जायते रोगः[131]<br>कदाचिच्च यवान्नभाक् ॥ 11.37 |
| न विशुचिर्विशूलं च<br>न च प्लीहा न च क्रमिः ।<br>न च रक्तप्रकोपश्च<br>न च वातादिधातवः ॥ 111 | न च शूलं न च श्वासो<br>न च प्लीहा न च क्लमः[132] ।<br>न च रक्तप्रकोपश्च<br>न च वातादिधातवः[133] ॥ 11.38 |
| मुकुष्टभोजने वाजी<br>पुष्टिं शरदि गच्छति ॥ 112 cd | मुकुष्टभोजनाद्वाजी<br>पुष्टिं गच्छत्यलौकिकीम् ॥ 11.41 cd |
| अप्राप्तौ तु मुकुष्टानां<br>मुद्गा देया विवेकिना ॥ 112 ef | अप्राप्तौ तु मुकुष्टानां<br>मुद्गा देया मनीषिभिः[134] । 11.42 ab |
| ऋतौ वसन्ते संप्राप्ते<br>वाहयेत्सततं हयम् ।<br>सनिम्बलवणं दद्या-<br>त्तैलं लवणमेव च ॥ 113 | वसन्तसमये प्राप्ते<br>वाहयेत्सततं हयम् ।<br>सनिम्बं लवणं दद्या-<br>त्ताभ्यां तैलं[135] विशेषतः ॥ 11.50 |
| वसन्तसमये योऽश्वः<br>स्थाने तिष्ठति बन्धने ।<br>तस्योत्साहप्रणाशः स्या-[136]<br>दालस्यं जायते तथा[138] ॥ 114 abcd | वसन्तसमये योऽश्वः<br>स्थाने तिष्ठति बन्धने ।<br>तस्योत्साहः प्रणश्येत[137]<br>सालस्यं जायते वपुः ॥ 11.52 |
| तस्मात्सर्वप्रयत्नेन<br>वसन्ते वाहयेद्धयम् ॥ 114 ef | तस्मात्सर्वप्रयत्नेन<br>वसन्ते वाहयेद्धयम् ॥ 11.53 cd |
| ग्रीष्मकाले तु संप्राप्ते<br>दूर्वाभोज्यं प्रशस्यते ।<br>वाजिनामिह सर्वेषां<br>घर्मतापोपशान्तये ॥ 115 | ग्रीष्मकाले च संप्राप्ते<br>दूर्वाभोज्यं प्रशस्यते ।<br>वाजिनामिह सर्वेषां<br>घर्मतापोपशान्तये ॥ 11.54 |

131. अश्व. ख–ततश्च जायते रागः ।
132. अश्व. क–प्लीहं न च तथोदरे ।
133. अश्व. क–वातादि व्याधिजः ।
134. अश्व. क–विवेकिभिः ।
135. अश्व. क–सतैलं च ।
136. मु. क–तस्योत्साहः प्रणश्येत ।
137. अश्व. क–तस्योत्साहप्रणाशाय ।
138. मु. क–सालस्यं जायते वपुः ।

घृतपानं विशेषेण
सुच्छायासु निबन्धनम् ।
रक्तस्रावश्च गात्रेषु
घासं वा घृतसंयुतम्[139] ॥ 116

पिप्पली सैन्धवं चैव
नागरं च गुडान्वितम् ।
प्रातर्दत्तं तुरंगाणां
नस्यं श्लेष्मविनाशनम् ॥ 118

नस्यं पर्युषितं तोयैः
प्रातर्दत्तं च केवलम् ।
अश्वानां च नराणां च
चाक्षुष्यं बलवर्धनम् ॥ 119

द्विपञ्चाशत्प्रमाणेन
श्रेष्ठं तन्नस्यमुच्यते ।
पादोनं मध्यमं तत्र
षड्विंशत्यथ वाधमम् ॥ 120

माक्षिकं शर्करामिश्रं
चन्दनं केसराणि च ।
नस्योऽयं वारिणा सद्यः
पित्तनाशकरो मतः ॥ 121

शुण्ठी मुस्ता गुडूची च
तगरं सितसर्षपाः ।

घृतपानं विशेषेण
सुच्छायासु निबन्धनम् ।
रक्तस्रावे च गात्रेषु
ग्रासं वा घृतसंयुतम् ॥ 11.55

पिप्पली सैन्धवं सारं
नागरं च गुडान्वितम्[140] ।
कृत्तिकासारमध्याग्रं[141] ।
वाजिनां श्लेष्मनाशनम्[142] ॥ 12.2

नस्यं पर्युषितै[143]स्तोयैः
प्रातर्दत्तं तु केवलैः[144] ।
अश्वानां च नराणां च
चाक्षुष्यं बलवर्धनम् ॥ 12.13

द्विपञ्चाशत्प्रमाणं वा
श्रेष्ठं तन्नस्यमुच्यते ।
पादोनं मध्यमं तत्र
षड्विंशत्यां[145] तथाधमम् ॥ 12.17

माक्षिकं शर्करायुक्तं[146]
चन्दनं केशराणि च ।
नस्योऽयं वारिणा सद्यः
पित्तनाशकरः परः[147] ॥ 12.23

गुडूची शुण्ठी मुस्ता च
तगरं सितसर्षपाः ।

---

139. यु. क–ग्रीष्मे घृतं क्षतजमोक्षणघर्मशान्ति सुच्छायबन्धनविमर्दनशीततोयम् । दूर्वा तृणं लघु च कोमलमन्यदेव, यत्किञ्चिदेवमुपयुक्तमिदं वदन्ति ।

140. अश्व. क–निर्वारं गडडान्वितं ।

141. अश्व. ख–कृत्तिकाशस्य ।

142. अश्व. (?) सर्वदोषप्रशान्तये ।

143. अश्व. क–नस्ये पर्युषितं ।

144. अश्व. क–केवलं ।

145. अश्व. क–अष्टोत्तरं मध्यमं प्रोक्तं षड्विंशत्या ।

146. अश्व. क–मिश्रं ।

147. अश्व. क–सदा ।

संनिपाते कफाधिक्ये
नस्यं सस्तेः सुखप्रदम् ॥ 122

कङ्कोलं केतकी द्राक्षा
शर्करा मधुयष्टिका ।
दत्तोऽयं सघृतः पिण्डः
पुष्टिं नयति वाजिनाम् ॥ 123

मत्स्यमांसेन संयुक्तं
माषचूर्णं घृतप्लुतम् ।
बलहीनस्य वाहस्य
पिण्डोऽयं बलवर्धनः ॥ 124

त्रिफला कटुका मुस्ता
विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां
वाजिनां पिण्ड आर्तिनुत् ॥ 125

सैन्धवं नागरं श्यामा
गुडूची चित्रसर्षपाः ।
तथाम्लवेतसं सस्तेः
पिण्डोऽयं शूलनाशनः ॥ 126

सौवर्चलं हरिद्रा च
पिप्पली चैन्द्रवारुणिः ।
मूत्रकृच्छ्रे प्रशंसन्ति
पिण्डोऽयं वाजिनां हितः ॥ 127

केसरं पद्मतालं च
श्रीपर्णी बदरीफलम् ।
कृत्वैकत्र हये दत्तः
पिण्डोऽयं विषनाशनः ॥ 128

संनिपाते सपित्तेऽयं
नस्यः स्याज्जीवरक्षकः[148] ॥ 12.24

कङ्कोलं[149] केतकी द्राक्षा
शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः
पुष्टिं नयति वाजिनः[150] ॥ 13.4

मत्स्यमांसेन संयुक्तं
ग्रावचूर्णं[151] घृतप्लुतम् ।
बलहीनस्य वाहस्य
पिण्डोऽयं बलवर्धनः ॥ 13.5

त्रिफला कटुका मुस्ता
विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां
वाजिनां पिण्ड आर्तिहृत् ॥ 13.9

सैन्धवं नागरं श्यामा
गुडूची सितसर्षपाः ।
अम्लवेतसमश्वानां[152]
पिण्डोऽयं शूलनाशनः ॥ 13.11

सौवर्चलं हरिद्रा च
पिप्पली चैन्द्रवारुणी ।
मूत्रकृच्छ्रे परीप्सन्ति[153]
पिण्डोऽयं तुरगस्य हि ॥ 13.30

केशरं पद्मनालं च
सौपर्णी[154] बदरीफलम् ।
तक्रमिश्रं हये दत्तं
सर्वथा विषनाशनम्[155] । 16 7

148. अश्व. क–तु नस्योऽयं वारिणा क्रमकारकः ।
149. अश्व. क–कङ्कोली ।
150. अश्व. ख–वाजिनां ।
151. अश्व. क–माषचूर्णं ।
152. अश्व. क–सयुक्ताः ।
153. अश्व.. क–प्रशंसन्ति ।
154. अश्व. क–सौवर्णी ।
155. अश्व.क–क्रममिश्रं हये दत्तं विषनाकरं परम् ।

| | |
|---|---|
| नृपवेश्मान्तपूर्वगे शुभ-<br>दिवसे कारयेद्धयागारम् । 129 a | नृपवेश्मवामभागे शुभ-<br>दिने तु कारयेद्धयागारम् । 18.1 ab |
| अत ऊर्ध्वं हुत्वाग्निं प्रवे-<br>शयेद्वाजिनो यथायोगम् ।<br>कुशलैस्तरुणैर्दीक्षै-<br>रनुपालैः स्थानपालैश्च ॥ | अत ऊर्ध्वं तु हुताग्निः प्रवे-<br>शयेद्वाजिनो यथायोग्यम् ।<br>कुशलैस्तरुणैर्दक्षै-<br>रनुकूलैः स्थानपालैश्च ॥ 18.4 |
| कृतमङ्गलसंस्कारा बद्ध्वा-<br>स्तेऽप्युत्तराभिमुखाः । 129 bcde | कृतमङ्गलसंस्कारा बद्ध्वा-<br>स्तेऽत्र चोत्तराभिमुखाः । 18.5 ab |

# APPENDIX II

This Appendix comprises a series of additional passages found in Yuktikalpataru, which is a collection of passages on variety of topics compiled by Bhoja. The work has been utilized for the critical edition of the Text and the variants have been cited in the foregoing footnotes of Appendix I. The variants cited here are those which are given by Pandit Iśvar Candra Śāstrī in his edition of Yuktikalpataru, and also those found in Aśvacikitsita of Nakula. ( Bibl. Indic. Series ). The following are the passages given at the beginning of the text—

सपक्षा राजिनः[1] पूर्वं संजाता व्योमचारिणः ।
गन्धर्वेभ्यो यथाकामं गच्छन्ति च समन्विताः[2] ।। २३ ।।

इन्द्रादेशाच्छालिहोत्रस्तेषां पक्षमथाच्छिनत्[3] ।
ततः प्रभृति निष्पक्षास्तुरंगा धरणीं गताः ।। २४ ।।

उत्तमा मध्यमा नीचाः कणी[4]( नी )यांसस्तथा परे ।
चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ।। २५ ।।

ताजिताः[5] खुरशालाश्च[6] तुषारा[7]श्चोत्तमा हयाः ।
गोजिकाणाश्च केकाणाः प्रौढाहाराश्च मध्यमाः ।। २६ ।।

ताडजा उत्तमाशाश्च[8] राजशूलाश्च मध्यमाः ।
गत्वराः[9] साध्यवासाश्च[10] सिन्धुदाराः[11] कणी( नी )यसः ।। २७ ।।

अन्यदेशोद्भवा ये च ते वै नीचाः प्रकीर्तिताः[12] ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ।। २८ ।।

समीरप्रभवाश्चान्ये तुरगा मृगजाः परे[13] ।
जलोद्भवा द्विजा ज्ञेयाः[14] क्षत्रिया वह्निसंभवाः ।। २९ ।।

---

1. अश्व.–वाजिनः ।
2. अश्व–समन्ततः ।
3. अश्व–इन्द्रादेशात्कृतं सर्वं भवतां पक्षपातनं ( ख–मया वत्साः कृतं वः पक्षभेदनं ) ।
4. अश्व.–कनीयांसः ।
5. अश्व.–ताजिकाः ।
6. अश्व.–खुरशाणाश्च ।
7. अश्व.–उत्तराः ( ख–तुषाराः ) ।
8. अश्व.–भाण्डजाश्चोत्तमांसाश्च ।
9. अश्व.–गोह्वराः ।
10. यु. क.–( क )साध्ववासाश्च, अश्व.–शाबराश्चैव ( क–सबरांसाश्च ) ।
11. अश्व.–सिन्धुपाराः ।
12. अश्व.–नीचनीचाश्च ते स्मृताः ।
13. अश्व.–उलूकमृगजास्तथा ।
14. अश्व.–द्विजातीयाः ( ख–द्विजा ज्ञेयाः ) ।

प्रभञ्जनभवा[15] वैश्या मृगजाः शूद्रजातयः[16]
पुष्पगन्धिर्भवेद्विप्रः[17] क्षत्रियोऽगुरुगन्धिकः[18] ॥ ३० ॥

घृतगन्धो भवेद्वैश्यो[19] मीनामोदी च शूद्रकः ।
विवेकी सघृणो विप्रस्तेजस्वी क्षत्रियो ब( ब )ली ॥ ३१ ॥

कोष्णभावो[20] भवेद्वैश्यः[21] शूद्रो निःसत्त्वको भवेत्[22] ।
विप्राद्या वाहनाः सर्वे त्रयो भूमिपतेः सदा[23] ।
शूद्रजातिं तुरंगं तु न स्पृशन्ति नरेश्वराः ॥ ३२ ॥

Before the first line inserts—

यदाह नकुलः—

सप्तवर्णा भवन्तीह[24] सर्वेषां वाजिनां ध्रुवम् ।
तानहं कीर्तयिष्यामि भेदैर्जातननेकधा ॥ ३८ ॥

After line 2 inserts—

श्वेतः कुन्देन्दुसंकाशो रक्तः कौसुम्भसंनिभः[25]
हरिद्रासदृशः पीतः सारङ्गः कर्बुरः स्मृतः ॥ ४० ॥

After line 4 inserts—

दन्तेषु व्यञ्जनं यद्व(द्य)त् तेन ज्ञेयो वयःक्रमः ॥ ४२ ॥

तद्यथा—

कालिका हरिणी शुक्ला काचा मक्षिकया सह ।
शङ्खो मूषलकं चैव दन्तानां चलतां( ता ) तथा ।
इत्यष्टौ व्यञ्जनान्याहुरथैषां लक्षणं शृणु ॥ ४३ ॥

चतुर्भिर्वत्सरैर्दन्ताश्चत्वारः परिकीर्तिताः[26] ।
पञ्चभिश्च षडित्येवं जायन्ते त्वथ कालिकाः ॥ ४४ ॥

---

15. अश्व.–समीरप्रभवाः ( ख–प्रभञ्जनोद्भवाः ) ।
16. अश्व.–एणोलूकाश्च शूद्रजाः ।
17. अश्व.–पुष्पगन्धः सदा विप्रः ( ख–पुष्पगन्धसमः ) ।
18. अश्व.–अगुरुगन्धकः ।
19. अश्व.– सदा वैश्यो ।
20. यु. क. ( ख )–कोष्णभावे ।
21. अश्व–दुष्टभावस्तथा वैश्यः ।
22. अश्व.–निःसत्त्वकातरः ( क– कारकः )
23. अश्व.–विप्रार्हा वाजिनः सर्वे क्षत्रियो भूपतेः ( ख–त्रयो भूमिपतेः ) सदा ।
24. अश्व.–वर्णाः सप्त भवन्तीह ( क—वर्णा भवन्ति येऽपीह ) ।
25. अश्व.–श्वेतः प्रालेयसंकाशो रक्तः कुङ्कुमसंनिभः । यु. क. ( ख ) कुन्देन्दुसंनिभः ।
26. अश्व.–कालिकान्ये भवन्ति च ।

षष्ठे संवत्सरे प्राप्ते कालिकान्या भवेत्तु हि।
तथान्या सप्तमे वर्षे चतुर्थी[27] कालिका भवेत्[28] ॥ ४५ ॥

अष्टमे वत्सरे प्राप्ते जायन्ते सर्वकालिकाः[29]।
नवमे त्वथ ताः सर्वा आपीताः संभवन्ति च[30] ॥ ४६ ॥

केचिदेकादशे[31] वर्षे तावत्पीतत्वमागताः।
ततः श्वेताः प्रजायन्ते[32] चतुर्दशसमावधि[33] ॥ ४७ ॥

ततः काचप्रभाः सम्यग्यावत् संवत्सरास्त्रयः।
ततः सप्तदशादूर्ध्वं यावद्वर्षाणि विंशतिः ॥ ४८ ॥

मक्षिकाभां वदन्त्येषां[34] यावद्वर्षत्रयं पुनः।
शङ्खाभासाः सर्वदन्ता भवन्ति वाजिनां ततः ॥ ४९ ॥

त्रयोविंशात्परे वर्षे दशमा मूषला मताः।
षड्विंशात्परतो दन्ताः स्थानाच्चलनमाप्नुयुः ॥ ५० ॥

यावद्वर्षत्रयं पश्चान्निपतन्ति समात्रये (?)।
द्वात्रिंशद्वत्सरे वाजी नूनं निर्वाणमाप्नुयात्[35] ॥ ५१ ॥

दीर्घाः शुष्का विशालास्या[36] ये भवन्ति तुरंगमाः।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्माणि ॥ ५२ ॥

After line 14 inserts—

विमिश्रवर्णकाः सर्वे प्रशस्ता वाजिनो मताः[37] ॥ ५९ ॥

यस्योत्कृष्टतरा वर्णा वृद्धिं यान्ति शनैः शनैः[38]।
नाशयन्ति तथा नीचान्करोति स[39] बहून्हयान् ॥ ६० ॥

---

27. यु. क. (क) चतुर्थे।
28. अश्व.–तथान्यः सप्तमे बर्षे चतुर्थः कालिको भवेत्।
29. अश्व.–प्राप्ताः स्युः सार्वकालिकाः।
30. अश्व.–नवमे त्वथ वा रेखा पीतत्वं शंसयन्ति च।
31. अश्व.–तथाप्येकादशे।
32. अश्व.–प्रदृश्यन्ते।
33. अश्व.–यावद्वर्षत्रयं पुनः।
34. अश्व.–मक्षिकाभा रदास्तेषां। यु. क. (ख) मक्षिभा(का)भा वदन्ते(न्त्ये)षां।
35. अश्व.–प्रकम्पं च समागम्य पश्चात् पातः समात्रयम्। द्वात्रिंशद्वत्सरैरेव वाजी निर्वाणमाप्नुयात्।
36. अश्व.–दीर्घसूक्ष्माविमांसास्याः।
37. अश्व.–स्मृताः।
38. अश्व–यस्योत्कृष्टतरो वर्णो वृद्धिं याति शनैः शनैः।
39. अश्व.–स करोति।

रोम्णां[40] भ्रमिवदावृत्तिरावर्त इति गद्यते ।
षड्विधो दक्षिणो वामो दक्षिणस्तु शुभावहः ॥ ६१ ॥

After line 44 inserts—

रोम्णां वृश्चिकवत्स्थानं शुक्तिरित्यभिधीयते ।
यत्रावर्तः शुभस्तत्र शुक्तिस्तत्र शुभावहा[41] ॥ ६८ ॥

After line 62 inserts—

दुर्लक्ष्मवाजिनं जह्याद्यदीच्छेत् शाश्वती श्रियम्[42] ।
यस्तु ( स्य ) वर्णविभेदेन ज्ञायते रोमसंभवात्[43] ॥ ७१ ॥

पुष्पाख्यः स परित्याज्यः सर्ववाजिभयावहः ।
यस्यावशेषवर्णेन छाद्यते च प्रधानतः[44] ॥ ७२ ॥

विवृद्धिं गच्छतः सोऽश्वः[45] कुरुते[46] हयसंक्षयम् ॥ ७३ ॥

After line 51 inserts—

वाजी मेढ्रगतावर्तो[47] वर्जनीयो महीभुजा[48] ॥ ७७ ॥

त्रिवलिप्रभवावर्तस्त्रिवर्गस्य प्रणाशकः[48] ।
पृष्ठवंशे[50] यदावर्त एकः संपरिलक्ष्यते[51] ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः ॥ ७८ ॥

गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्तकास्त्रयः ।
स कृतान्तस्तु रूपेण[52] वर्जनीयस्तुरंगमः ॥ ७९ ॥

Bafore line 207 inserts—

·सुस्थस्यापि च[59] नेत्रान्ते स्यातां नीले च वाजिनः ।
तथैव तस्य जानीयाद्भवेन्मृत्युर्द्विवार्षिकी[54] ॥८८ ॥

---

40. यु. क ( क )–व्योम्नां ।
41. यु. क. ( ग )–शुभा भवेत् ।
42. अश्व.–यदि वाञ्छति कल्याणं वाञ्छेच्च श्रीसमुद्भवम् ( ख–कर्मणि वाञ्छां च करोति श्रीसमुद्भवां ) ।
43. अश्व.–यस्य रोमविभेदेन ( ख.–हयस्य वर्णभेदेन ) जायन्ते रोमबिन्दवः ।
44. अश्व.–यस्याधमेन वर्णेन छाद्यते च प्रधानजः ( ख–सीद्यन्ते च प्रधानजाः ) ।
45. अश्व.–गच्छता ( ख–गच्छते ) सोऽश्व ।
46. अश्व.–करोति ।
47.–अश्व.–मेढ्तलावर्तो ।
48. अश्व.–महीभुजां ।
49. अश्व.–त्रिवलिस्थो यदावर्तस्त्रिवर्गस्य प्रणाशकः ( ख–प्रसाधकः ) ।
50. अश्व.– पुच्छदेशे ( ख–पृष्ठदेशे ) ।
51. अश्व.–संप्रदृश्यते ।
52. अश्व.–कृतान्तस्वरूपेण ।
53. अश्व.–स्वस्थस्यापि हि ।
54. अश्व.–गन्धश्च सदृशः क्षोण्या तदा मृत्युर्द्विमासिकः ।

After line 208 inserts—

यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ॥ ८९ ॥

विशेषाद्वाजिनो ज्ञेयं तस्यायुः पञ्चमासिकम्[55] ॥ ९० ॥

After line 210 inserts—

पीते मासद्वयं तथा ।

रक्ते मृत्युस्त्रिभिर्मासैश्चतुर्भिश्च विचित्रके ॥ ९१ ॥

After line 512 inserts—

चणकाभे तथाष्टभिः ॥ ९२ ॥

दशभिर्जतुकोपमे ।

एकादशे सुवर्णाभे वत्सरेण हिमद्युतौ ॥ ९३ ॥

After line 218 inserts—

जिह्वाग्रे पिडका यस्य पादान्ते च तथोदरे[56] ।

मूत्रं करोति रक्तं वा[57] मासषट्कं स जीवति ॥ ९५ ॥

कर्णयोः क्षतजं यस्य नेत्राभ्यां वा प्रवर्तते ।

वाजिनः पित्तग्रस्तस्य दश मासान्स जीवति[58] ॥ ९६ ॥

After line 222 inserts—

स्फुलिङ्गा यस्य दृश्यन्ते पुच्छतोऽश्वस्य वह्निजाः ।

निर्गच्छन्तः प्रभोर्नाशं ते वदन्ति निशागमे[59] ॥ ९९ ॥

अश्वशालां समासाद्य यदा च[60] मधुमक्षिकाः ।

मधुजालं प्रव( ब )ध्नन्ति[61] तदाश्वान्[62] घ्नन्ति कृत्स्नशः ॥ १०० ॥

स्ववरुणगुरुपार्श्वस्थेषु भौमार्कवारे

स्वतिथिकरणताराचन्द्रयोगोदयेषु ।

शुभमिह हयकाष्ठं कार्यमार्येण बुद्ध्वा

न शनिरविकुजानां वासरे नोग्रतारे॥ १०१ ॥

---

55. अश्व.–विशेषात्स्वरभेदः स्यात्तस्यायुः पाञ्चमासिकं ।

56. अश्व.–ग्रीवाग्रे पिण्डिका यस्य जायते च तथाधरे ।

57. अश्व.–रक्ताढ्यं ।

58. वर्णः श्वेतो यदा यस्य नेत्रा( त्र )योश्च प्रजायते । दशमासान्समासाद्य पित्तार्तो न स जीवति ( क–वाजिनः पित्ततप्तस्य दशमासं स जीवति ) ।

59 अश्व.–स्फ ( स्फु )लिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः । परचक्रागमाशंसी विज्ञेयो हयपण्डितैः ।

60. अश्व. यदान्तर् ( क–यदा च ) ।

61. अश्व.–प्रकुर्वन्ति ( ख–प्रबध्नन्ति ) ।

62. यु. क ( घ )–तदश्वान् ।

Before line 139 inserts—

चलकिश( स )लयपादः कर्णमध्यैकदृष्टि-
र्न चलति कटिदेशः स्वासने संस्थितो यः[63] ।
हयहृदयगतिज्ञः स्थानदण्डावतापः[64]
स खलु तुरगयाता[65] पूज्यते[66] पार्थिवेन्द्रैः ॥१०२ ॥

Before line 143 inserts—

रक्तकोष्ठे[67] मुखे चौष्ठे गले पुच्छे च ताडयेत्[68] ।
भीते वक्षःस्थलं हन्याद्वक्त्रं चौन्मार्गगामिनः[69] ॥ १०४ ॥

Before line 149 inserts—

हस्तैश्चतुर्विंशतिभिर्धनुर्दण्ड उदाहृतः ।
अक्ष्णोर्निमेषणान्यष्टौ मात्रा प्रोक्ता वित्र( च )क्षणैः[70] ॥ १०७ ॥

मात्रापोडशकेनाश्वो यो धावति धनुःशतम् ।
तमुत्तमोत्तमं[71] विद्याद्वायुवेगं महाजवम्[72] ॥ १०८ ॥

विंशत्या मध्यमो ज्ञेयो ह्यतोऽन्ये चाधमा मताः ।
नभस्याश्वयुजे मासि नैवाश्वान्वाहयेन्नृपः[73]॥ १०९ ॥

वज्राग्निसदृशं पित्तं श्रमात्कुप्यति वाजिनाम् ।
कार्येण महता वापि योज्यो मासि तु कार्त्तिके[74] ॥ ११० ॥

हेमन्ते शिशिरे योगो[75] वसन्ते च यदृच्छया ॥ १११ ॥

Miscellaneous Verses found at the end of the Text:—

भोजेन तु हयलक्षणमन्यथोक्तम् । तद्यथा-
स्निग्धाङ्गो लघुतरलोमकस्तु पुच्छो
दीर्घास्यास्थिनयनकेशपृष्ठवंशः[76] ।

---

63. अश्व.–कटिदेशे आसने संस्थितश्च ( क–व्यापितोऽपि स्थितो यः )।
64. अश्व–यु. क. ( ख )–स्थानदण्डावपाती।
65. अश्व.–° योक्ता.
66. अश्व.–मान्यते ( क–पूज्यते )।
67. यु. य. ( क )–रक्तकण्ठे।
68. अश्व.–वक्त्रे स्कन्धे मुखे कोष्ठे गात्रे सक्थौ च ताडयेत्।
69. अश्व.–चोन्मार्गगामिनं।
70. अश्व.–हस्तश्च तैश्चतुर्विंशैः कार्मुकं तैश्चतुर्गुणैः। अक्ष्णोर्निमेषणैः काष्ठा अष्टलघ्वक्षरं तथा।
71. अश्व.–तमश्वमुत्तमं।
72. यु. क. ( क ) महाजरं।
73. अश्व.–भाराध्वानं जवं त्यजेत्।
74. अश्व.–कार्येणैव महान् किंचिद् युज्यो नभसि कार्त्तिके।
75. अश्व.–योगं।
76. यु. क. (क)–स्निग्धा ...... कर्णपुच्छो दीर्घास्यत्रिनयनकेशपृष्ठवंशः।

रक्तोष्ठः पृथुलनितम्बभारर( व )क्षा
राजार्हो भवति तुरंगमः प्रशस्यः ॥ १३१ ॥

नाभि ( भेरा ) मारभ्य देहस्तु द्विधा पूर्वापरक्रमात् ।
पूर्वकायस्थिता रक्ताः शुभाय हयसंस्थिताः ॥ १३२ ॥

अधः काये स्थिता रक्ताः ( क्ता ) अधमत्वप्रकाशकाः ।
शक्तीनां वैपरीत्येन प्रशस्तफलमादिशेत् ॥ १३३ ॥

वात्स्यस्तु—
ब्रह्मादिजातिभेदेन हयजातिश्चतुर्विधा ॥ १३४ ॥

तद्यथा—
ये शुक्लाः सुविमलपुष्पगन्धका वा
शुद्धाङ्गाः सघृणसदुष्णभोजिनो वा ।
अक्रुद्धाः समरगता भृशं च पुष्टा–
स्ते विप्राः क्षितिपतिवाहनेऽतियोग्याः ॥ १३५ ॥

ये रक्ताः सद्गुरुगन्धयोऽहृता वा
संरुष्टा बहुतरभोजिनो बलाढ्याः ।
अश्रान्ताः सकलगुणग्रहाः प्रवीणा ( णा )
विज्ञेया विधिकरजातजातयस्ते ॥ १३६ ॥

ये पीताः खलु घृतगन्धयोऽपि ये वा
येऽक्रुद्धाः कथमपि गन्धरोषशालिनो ये ॥ १३७ ॥

बद्धा वा बहुतरनादघोषणा वा
विज्ञेया नृपवर वैश्यजातयस्ते ।
ये कृष्णाः सरुषामगन्धयोऽपि ये
वान्यथा बहुतरताडनैरपीमे ॥ १३८ ॥

क्षीणाङ्गा लघुतनयोऽपि वेशहीना-
स्तेशूद्राः क्षितिपतिना भृशं विहेयाः ।
एतत्तु एकैकमेव लक्षणं न सामुदायिकम् ॥ १३९ ॥

लक्षणद्वयसम्बन्धाद्द्विजातिः स्यात्तुरंगमः ।
चतुर्लक्षणयुक्तस्तु दूरे त्याज्यो हयाधमः ॥ १४० ॥

अन्यत्र तु ।
सात्त्विका राजसाश्चेति तामसाश्चेति ते हयाः ॥ १४१ ॥

ये शुद्धवर्णा भृशवेगयुक्ता अश्रान्तिभाजो बहुभोगिनश्च ।
अक्रोधशीलाः समरेऽतिरुष्टास्ते सात्त्विका भूप तुरंगमाः स्युः ॥ १४२ ॥

ये रक्तवर्णा गुरुवेगरोषाः कषातिघातं[77] न हि ये सहन्ते ।
येऽमी बलाढ्याः खलु दीर्घदेहास्ते राजसा भूप तुरंगमाः स्युः ॥ १४३ ॥

ये कृष्णवर्णास्तनुरोषवेगा अल्पाशिनो लक्षणलक्षिताश्च ।
ये दुर्बलाः सर्वगुणैर्विहीनास्ते तामसा भूप तुरंगमाधमाः ॥ १४४ ॥

द्वयोर्लक्षणसम्बन्धाद्द्विगुणो वाजिमध्यमः ।
त्रयाणां गुणसम्बन्धात्त्रिगुणो वाजिनिन्दितः ॥ १४५ ॥

पराशरसंहितायां तु—
पृथिवि ( वी ) वायुतेजःखैः पञ्चभिस्तुरगाश्रितैः ।
उल्बणैः पञ्चधा भेदाः पराशरमता यथा ॥ १४६ ॥

ये स्थूलाः श्रमसहदेहरूपभाज-
श्चाक्रान्ता बहुतरभोजनाश्च दीर्घाः ।
अक्रुद्धाः समरगतास्तु रोषभाजो
भौमास्ते घनगुरुघर्घरस्वरास्तु ॥ १४७ ॥

ये श्लथाङ्गास्तनुबलाः श्रमसहकलेवराः ।
अक्रोधवेगाः स स्वप्ना ( ङ्गा ) आप्यास्ते तुरगाधमाः ॥ १४८ ॥

ये वातवेगप्रतिमोग्रवेगाः शुष्का भृशं दीर्घकलेवराश्च ।
अश्रान्तिभाजो बहुदूरगाश्च ते वायवा वाजिवराः प्रदिष्टाः ॥ १४९ ॥

ये क्रोधशीला भृशवेगयुक्ता मुक्ता दिनात्क्रोशशतं व्रजन्ति ।
ते तैजसाः पुण्यवतां प्रदेशे भवन्ति पुण्यैरपि ते मिलन्ति ॥ १५० ॥

एको यदा तैजससंज्ञकोऽश्वः किं कार्यमन्यतुरगैस्तुरगाधमैस्तु ।
शुद्धं यदा हीरकखण्डमेकं किं कार्यमन्यैर्मणिभिर्विचित्रैः ॥ १५१ ॥

उत्प्लुत्य ये वाजिवरा व्रजन्ति क्रुद्धा भृशं वेगसमन्विताश्च ।
ये लङ्घयन्तः परिखामपारां ते गागनाः पुण्यतमाः प्रदिष्टाः ॥ १५२ ॥

---

77. मु. क. (क)-कलाभिघातम् ।

द्वयोर्लक्षणसम्बन्धात्तुरगः स्याद्द्विभौतिकः ।
स्वजातिगुणभूतानां हयानां वाहनं शुभम् ॥ १५३ ॥

असज्जातिगुणादीनां वाहनं क्लेशकारिणम् ।
एषां चिकित्सा न प्रोक्ता ग्रन्थविस्तारसंभवात् ॥ १५४ ॥

शालिहोत्रादिविज्ञानात्ताद्विज्ञेयं यथोत्तरम् ।
असंभवे[78]हि दुष्टाश्वं वाहयेदिति चेत्तदा ॥ १५५ ॥

तिलं सकाञ्चनं दद्याल्लवणं वा गुडान्वितम् ।
रेवन्तं[79] पूजयेद्वापि निजं निर्मन्थयेत्तदा ।
दद्यात्ताम्रपलं वापि, अभावे सर्वकर्मणः १५६ ॥

एवमन्यत्रापि ।
काञ्चनं रजतं ताम्रं लौहमेतद्यथाक्रमम् ।
ब्रह्मादिजातिदोषाणां देयमेतत्प्रशान्तये ॥ १५७ ॥

अभावेऽपि च सर्वेषां ताम्रेण स्यात्प्रतिक्रिया ॥ १५८ ॥

---

78. यु. क. (क)-असम्भवेति । 79. यु. क- (ख)-वैमन्थम् ।

# APPENDIX III

## Critical notes

Line 7. भवेच्छ्यामैककर्णकः। All Mss. read श्यामैकवर्णकः This is apparently wrong. The description of a white horse is a point under consideration, and so it cannot be construed properly in the passage. अश्व. reads श्यामैककर्णकः; यु. क. and शार्ङ्गधर read श्यामैकश्रवणः.

8. Against the evidence of Mss. we have preferred श्यामकर्णः to श्यामवर्णः in view of श्यामैककर्णक in the line 7. It is corroborated by अश्व. and यु. क. शुक्र. reads श्यामकर्णः cf. Mbh. 5.104.26. (Cri. Edi.)

एकतःश्यामकर्णानां शतान्यष्टौ ददस्व मे।
हयानां चन्द्रशुभ्राणां गच्छ गालव माचिरम् ॥

9. सर्ववर्णस्य वाजिनः। सर्ववर्ण means (having only one colour of the body).

13. तथा वक्त्रे च मध्यमः। All Mss. read मध्यम. अश्व. शार्ङ्गधर read मध्यतः, यु. क. reads चन्द्रकं च ललाटके. From this it is clear that the horse having all his feet white and a white spot resembling the moon in the centre of the forehead is called कल्याणपञ्चक. So मध्यमः should be read as मध्यतः as in अश्व. शुक्र. and मानस. do not refer to this white spot at all. शुक्र. reads—मुखे पत्सु सितः पञ्चकल्याणोऽश्वः सदा मतः 187.109. मानस. describes कल्याणपञ्चक as follows—येन केनापि वर्णेन मुखे पुच्छे च (पादेषु) पाण्डुरः। पञ्चकल्याणनामायं भाषितः सोमभूभुजा ॥ 2. 213. 95.

—कल्याणपञ्चकः प्रोक्तः। शुक्र. and मानस. read पञ्चकल्याण.

—सर्वकल्याणकारकः। $B_2$ reads सर्वकल्याणकारकाः, which is incorrect. The relative pronoun यस्य in the verse requires the adjective सर्वकल्याणकारक to be in singular. AD read सर्वे कल्याणकारकाः, a reading which is not properly construable, सर्वे cannot refer to all the kinds of horses described in the previous verses, because the verse 5th describes यमरूप kind of horse which is not at all auspicious. On the contrary the verse describes it as अयोग्यो भूपतेर्नित्यम्। The horse कल्याणपञ्चक alone is सर्वकल्याणकारक and not others. Incidentally it is worth noting that Shivaji was said to ride only a कल्याणपञ्चक kind of horse. यु. क. avoids this difficulty by reading भर्तुः कल्याणकारकः.

20. सूर्यसंज्ञिकः। अश्व. reads सूर्यसंज्ञकः.

32. शिवसंज्ञिकः। अश्व. reads शिवसंज्ञकः. We have retained शिवसंज्ञिकः which is found in all Mss. and also in the prose passage following this verse.

50. प्रवासमरणं ध्रुवे। प्रवासमरण means death in travels. The word प्रवास is interpreted in the prose passage as संग्रामादौ. अश्व. reads the line as 'प्रवासं सततं ध्रुवे स्वभर्तुः क्लेशसंयुतम्। Thus अश्व. does not refer to मरण at all. शुक्र. reads—जानुसंस्था यदावर्ताः प्रवासक्लेशकारकाः। 186-97.

—56. हिनदन्तोऽधिकश्चैव। अधिक is explained by the prose passage as अधिकदन्त. $AB_2D$ read हीनदन्ताधिकश्चैव, which is incorrect. $B_1$ tries to correct this expression by reading हीनदन्तादिकश्चैव for हीनदन्ताधिकश्चैव. अश्व. reads हीनदन्तोऽधिदन्तश्च। शार्ङ्गधर reads हीनदन्तोधिकश्चैव, which is accepted by us. He explains the terms हिनदन्त and अधिकदन्त as पञ्चभिः सप्तभिर्दन्तैर्वाहौ हीनाधिकौ स्मृतौ 1658।

—करालीं कृष्णतालुकः। शार्ङ्गधर defines कराली and कृष्णतालुकः as कराली चाध-रैर्दन्तैश्छाद्यन्ते यस्य चोत्तराः 1658। and कृष्णं तालु भवेद्यस्य स भवेत्कृष्णतालुकः 1659।

—57. शार्ङ्गधर gives the description of मुशली and श्रृङ्गी as follows–सितैक-चरणः पुष्पहीनस्तु मुशली स्मृतः 1660। and कालाभावर्तकः कर्णदेशे यस्य स श्रृङ्गिकः 1660।

—72. भ्रूभ्रमरे मित्रवियोगः। This passage needs be expanded something like यस्य भ्रुवोः भ्रमराः प्रजायन्ते स मित्रवियोगं करोति।

—73. पृष्ठे भ्रमरः स संग्रामे स्वामिहन्ता। कक्ष्यां भ्रमरद्वयं स स्वामिभ्रातृवधं करोति। Supply यस्य before पृष्ठे and कक्ष्यां.

—79. उरसि भ्रमरद्वयं स्वामिगृहे लक्ष्मीर्वर्धते। We have to read this as यस्य उरसि भ्रमरद्वयं वर्तते or प्रजायते तस्य स्वामिगृहे लक्ष्मीर्वर्धते।

—82. तथाजिनेनैव समानवर्णः। All the Mss. read तथाजिनत्वेन; but it is not quite intelligible. The meaning of the passage appears to be, 'a horse having the colour resembling the deer-skin etc.' So we read तथाजिनेनैव समानवर्णः।

—84. °निस्त्रिंशशङ्खोपमा। $AB_1D$ read निस्तृंश wrongly for निस्त्रिंश which means, a sword. शुक्र. reads खड्ग 184-80.

—85. वेदीस्वस्तिक°। All the Mss. read वेदि. M. W. remarks that the word वेदी is used later, and in view of the word वेदी used in the prose passage, we have preferred वेदी.

—91. सप्तविंशप्रमाणेन। सप्तविंश is grammatically incorrect. It should be सप्तविंशति. Compare सप्तविंशति° used in line 93.

—94. Similarly we have to read चतुर्विंशति and सप्तविंशति for चतुर्विंशत् and सप्तविंशत् respectively.

—97. Read चतुर्विंशति for चतुर्विंशत्. It is to be noted here that with सप्तविंशति and चतुर्विंशति, the line becomes defective metrically.

—104. तथोन्नते घ्राणपुटं ललाटं शफाश्च तज्ज्ञाश्चरणा वदन्ति। उन्नते the dual form is used for घ्राणपुटं and ललाटं taken together. Similarly we have to supply उन्नताः in the last pāda.

—110. लघूनि बन्धाश्च मणेस्तु कोष्ठम्। The word लघु is to be construed with all the limbs mentioned in the verse.

—115. सानुरागं च मोक्षणम्। All the Mss. read मोशणं. But we have accepted मोक्षणं on the strength of the reading found in अश्व,

—128. पितृदोषेण जाड्यता। All the Mss. read जायते. Four kinds of दोष's are enumerated in the verse viz. मातृदोष, पितृदोष, स्वामिदोष and स्वदोष and accordingly all the four दोषs need be mentioned. If we read जायते, the balance in the construction of the passage is not secured. The reading जाड्यता is corroborated by अश्व. or are we to take लघुत्व as मातृदोष as well as पितृदोष ?

—135. सुस्निग्धवर्णप्रभाः। All the Mss read सुस्नग्ववर्गप्रभाः. But it does not yield any sense. It cannot be सुस्वृष्टवर्णप्रभाः for reasons of metre. We have, therefore, accepted the reading सुस्निग्धवर्णप्रभाः used in अश्व.

—148. बाल्यो वृद्धस्तथा रोगी। $AB_2D$ read बाल्ये, $B_1$ reads बाल्यो. अश्व. reads बालो वृद्धः कृशो रोगी। यु. क. reads बालं वृद्धं कृशं रुग्नं। and यु. क. ख reads बालो वृद्धः कृशो रोगी as in अश्व. So बाल्यो is to be taken in the sense of बाल्यविशिष्ट. The words बाल्य, वृद्ध, रोगिन्, दत्तस्नेह, महाबल, सर्वातिरिक्तकोष्ठ, अतिश्रान्त, अतिवृद्ध, निःस्नेह and अतिकिशोरक in 149 and 150, are to be construed as objects of वाहयेत्. So we read with यु. क. ख.

—153. समं च विपुलं चैव किंचित्पांसुसमन्वितम्। All these are the qualifying words having reference to रङ्गभूमि. So we have to read the line as समां च विपुलां चैव किंचित्पांशुसमान्विताम्। which is exactly found in अश्व.

—154. एकान्ते विजने चैव रङ्गभूमिं हयं नयेत्। $AB_2$ read वाजिनं, $B_1D$ read वाजिने But with either वाजिनं or वाजिने we cannot construe the line properly owing to the presence of the word हय in the passage. It is most probably a mistake of the scribe for विजने. The latter reading is supported by अश्व.

—158. घासमुष्टिं च जीर्यते। All the Mss. read घासपुष्टिं. अश्व. reads घासं मुष्टिं च (which again is probably a mistake for घासमुष्टिं च) चारयेत्. So we read घासमुष्टिं. प is early confused with य.

—167. आषाढसमये प्राप्ते शिरामोक्षेण कृत्स्नशः। $AB_2D$ read श(शि)रामोक्षण कृत्स्नशः। Are we to read शिरामोक्षणं and supply the verb कारयेत् and read with one of the Mss. utilized for the text of अश्व.? अश्व. क reads शिरामोक्षं च कारयेत्. It is definitely a simplification of the crude construction of अश्व. text. अश्व. reads आषाढसमये प्राप्ते शिरामोक्षेण कृत्स्नशः। तेन संशोध्यते रक्तं etc. The possible construction appears to be आषाढसमये प्राप्ते सति वाजिनो दोषसंभवं रक्तं विशोधयेत्। So we read शिरामोक्षेण with अश्व.

—188. स षण्मासमध्ये निपतेत्। $AB_2D$ read निपतयेत्. The root नि + √पत् is used here in the sense of dying.

—201. ततो लङ्घनमर्हति। लङ्घन means absence of food.

—208. स निर्वाणमाप्नोति। The word निर्वाण is used in Buddhism and Jainism in a peculiar sense with a philosophical tinge about it. But in the passage under discussion it simply means death !

—210. कृष्णस्तु जीवते मासं। अश्व. reads कृच्छ्रं च जीवते मासं. The word कृष्ण is an adjective qualifying बिन्दु in line 209. The prose passage following this verse makes the idea clear. It reads यस्य जिह्वायां कृष्ण-बिन्दुर्दृश्यते तस्य माससमात्रेण मृत्युः। so we have rejected the reading of अश्व. जीवते is used for जीवति for the sake of metre.

—277. दद्यादश्वेषु नित्यशः। Locative is used in the sense of dative.

—279. यवसं वा तदुर्थं तैर्नीरोगो जायते हयः। supply दद्यात् in the first clause.

—281. तैलानां च घृतानां च यवसं यवसंभवं।. The importance of यव for the proper nourishment of horses is described in the passage. Supply श्रेष्ठ to make the meaning of the passage quite clear.

—289. परीक्षा यवभक्षणे। The two similes used in the verse require यवभक्षण in the nominative case corresponding to अग्नि and प्रतिक्रिया.

—291. सर्वे दोषाः प्रणश्यन्ति स्तोकेरपि यवैर्हये।. The comparison of a boat with diseases is not a happy one. Moreover, one expects the word यव in instrumental singular corresponding to छिद्रेण and the word दोष in nominative singular correponding to नौः.

—292. यवान्दद्यात्तु वाजिषु। Locative is used for dative.

—306. दूर्वाभोज्यं प्रशस्यते। All the Mss. read पूर्वं भोज्यं, but it does not make any sense. The reading दूर्वाभोज्यं is supported by अश्व.

—310. पुनश्च पायेत्तोयानि। Read पाययेत्तोयानि. The loss of one य in पाययेत् is effected probably for the sake of metre.

—312. प्रातर्दत्तं तुरंगाणां। Genitive is used for dative.

—332. कृत्वैकत्र हये दत्तः। Locative is used for dative.

—333–337. The verse has ten pādas. It is possible to read the first two lines as forming one verse and the remaining three lines as another verse. The passage describes अश्वशालाविधि.

—338–343. These two verses describe the various activities of the horse, foretelling good or bad for the owner. These two passages can conveniently and fittingly be shifted over under the section आरोहण and placed after the line 166 which describes the various activities of the horse foretelling a happy journey or a successful accomplishment of an undertaking of its master.

# APPENDIX IV

## Glossary

of important and technical words in the text.

अक्रिया *f.* inactivity, 287.
अदण्ड *m.* non-punishment, 147.
अधिकदन्त *m.* a kind of horse, 58.
अधिकाण्डक *m.* a kind of horse, 64.
अनुपाल *m.* a keeper, 336.
अनुलोमयायिन् *mfn.* going in regular order, 341.
अभ्यङ्ग *m.* rubbing with unctuous substance, 259.
अलक्षण *n.* an inauspicious sign, 119.
अवाहित *mfn.* not caused to be ridden, 114.
अश्वचिकित्सक *m.* a physician treating horses, 196.
अश्वसंघात *m.* a war with horses, 20.
अष्टमङ्गल *m.* a horse with a white face, feet, tail, breast and mane, 12.
अस्थाने *ind.* in wrong place, or in wrong time, unseasonably, 145.

आरोग्य *n.* freedom of disease, 184.
*आरोहण[1] *n.* riding, 118.
आरोहणविहीन *mfn.* devoid of riding, 119.
आर्तिनुत् *mfn.* destroying or removing pain, 326.
आवर्त *m.* a lock of hair that curls backwards (especially on a horse considered lucky), 16.

उत्साहप्रणाश *m.* loss of energy, 304.
उत्सेध *m.* height, 100.
उदर *n.* belly, stomach, bowels, 185.
उष्ट्राक्ष *mfn.* camel-eyed (horse), 136.

*ऋतुचर्या *f.* seasonal proceeding, 256.

एकवर्ण *mfn.* (horse) of one colour, one-coloured, 62.
एकाण्ड *m.* having only one testicle, a kind of horse, 64.
एकान्ते *ind.* in a lonely or retired or secret place, 154.
एकाहान्तरिते *ind.* on alternate days, 260.

कण्डू *f.* itching, 174.
कपिलकाकार *mfn.* having reddish form, 3.
कफप्रणाश *m.* removal of phlegm or cold, 191.
कफाधिक्य *n.* an excess of phlegm or cold, 320.
कफोदय *m.* an appearance or development of phlegm, 192.
कफोद्भव *m.* see कफोदय 246.
*करालिन्[2] *m.* a kind of horse, 56.
कर्बुरक *mfn.* variegated, 246.
कल्याणपञ्चक[3] *m.* a horse with white feet and white mouth, a kind of horse, 14.
कालिकासंनिभ *mfn.* appearing, blakish, 243.
कुट्टयित्वा *g.* having grinded or pounded, 360.
कृष्णतालु *m.* a kind of horse, having black palate, 67.
कृष्णतालुक *m.* a kind of horse, having black palate, 56.
कृष्णबिन्दु *m.* a black spot, 211.
कोश *m.* testicle or scrotum, 80.
क्रमि[4] *m.* a worm, 296.

---

1. The Vocables marked with asteric sign are used in the Sanskrit English Dictionary of Monier Williams, in a different sense. 2. A kind of horse having a gaping mouth and projecting teeth (M. W.). 3. पञ्चकल्याणक (M. W.) 4. Wrong form for कृमि (M. W.)

क्रूर *m.* a kind of horse, 34.
क्राथ *m.* a mixture of the materials for decoction, 280.
क्षीरौदन *m.* rice boiled with milk, 262.

गति *f.* speed, 126.
गल्लावर्त *m.* an *āvarta* on the neck or cheeks, 31.
गुरूपदेश *m.* consultation of the experts, 229.

*घास[1] *n.* food, meadow or pasture grass, 309.

चक्रवर्तिन् *n.* a kind of horse having one or three curls on the shoulder, 40.
चक्रवाक *m.* a kind of horse, having white feet and white eyes, 6.
चतुरङ्गिक *m.* a kind of horse, having four curls on the forehead, 76.
चन्द्रादित्यौ *m.* N. of curls on the forehead of the horse, 69.
चिन्तामणि *m.* a kind of horse, having a big curl on the neck, 44.

*जयवर्धन *mfn.* granting victory, 69.
जयावर्त *m.* a curl boding or granting victory, 26.
जव *m.* speed or swiftness, 130.
जवहीन *mfn.* having no speed or swiftness, 123.
जाड्यता[2] *f.* inactivity, dullness 128.
जीवन *n.* giving life or energy, 160.
त्रिकर्णिन् *m.* a kind of horse, having three ears, 83.
त्रिकूट *m.* a kind of horse, 22.
त्र्यण्ड *m.* a kind of horse, having three testicles, 64.
दैर्घ्य *n.* length, longness, 100.

द्विखुरिन् *m.* a kind of horse, having two hoofs, 83.

नस्य *n.* a sternutatory, errhine, 312.
नस्यकर्मन् *n.* the application of a sternutatory, 280.
नाडी *f.* a tabular organ (as a vein or artery of the body), 223.
नासा *f.* a nostril, 227.
*√निपत्—to die, 188.
निर्वाण[3] *n.* death, 208.
निःस्नेह *mfn.* not unctuous or disagreeable, 150.
निस्त्रिंश *m.* a sword, 84.
नीरोग *mfn.* free from sickness, healthy, 178.
नीलपीत *mfn.* dark-green, blueyellow, 207.
नृपोचित[4] *mfn.* fit for the king, 26.

पर्युषित *mfn.* (in compound) having stood for a time or in some place, 313.
पिण्ड *m.* a roundish lump, morsel, 192.
पित्त *n.* bile, bilious humour, 170.
पित्तनाशकर *mfn.* bile-destroying, 318.

बाल्य[5] *m.* not full-grown or developed, 148.
बिडालाक्ष *mfn.* cat-eyed (horse), 72.

भ्रमर *m.* a curl of hair, 30.
भ्रमरचतुष्टय *n.* a collection of four curls, 76.
भ्रमरद्वय *n.* a collection of two curls, 70.
भ्रमरसदृशवर्ण *mfn.* having a colour resembling that of a bee, 68.
भ्रूभ्रमर *m.* a curl of hair on eyebrows, 72.

---

1. Occurs in masculine in M. W. 2. The formation of the vocable is interesting. 3. It is used only in ordinary sense of death. 4. Occurs only in masculine in M. W. 5. Used in the sense of बाल.

मन्दाग्नि *m.* slowness of digestion, 206.
महारिष्ट *mfn.* highly disastrous, 48.
महावर्त *m.* a big curl, 43.
महासौख्य[1] *n.* the highest happiness, 33.
*मातृदोष *m.* deficiency in mother, 128.
मात्रा *f.* a measure, quantity, 252.
मुशलिन् *m.* a kind of horse, having his feet of one colour and the rest of body of different colour, 57.
मूत्रकृच्छ्र *m. n.* a painful discharge of urine, 330.

यमदूत *m.* a kind of horse boding death, and one whose lips do not meet, 53.
यमरूप *m.* a kind of horse boding death and one who is all-coloured and has all his feet black, 10.

रक्तपित्तप्रकोप *m.* an excitement or raging of bile in the blood, 173.
रक्तपित्तविकार *m.* a disease of blood and bile, 159.
रक्तपित्तातुर *mfn.* afflicted by blood and bile, 176.
रक्तप्रकोप *m.* an excitement or raging of blood, 297.
रक्तविशुद्ध *n.* complete purification of blood, 248.
रक्तस्राव *m.* a flow of blood, hemorrhage, 309.
रक्ताधिक *n.* an excess of blood, 169
रथिन् *m.* a horse accustomed to chariots, 29.
राजयोग्य *mfn.* befitting a king, 8.
राजार्ह *mfn.* fit for the king, 6.
राज्यभङ्ग *m.* subversion of sovereignty, 81.

लघु *n.* light in the stomach, easily digested, causing relief, 267.
लघुत्व *n.* quickness, 128.
*लङ्घन *n.* neglect of food, 201.
लम्ब *mfn.* long, large, hanging down, dangling, 60.
लालाविमोक्षण *n.* a flow of saliva, 200.

वज्रक *n.* a thunderbolt, 282.
*वज्रनिभ *mfn.* appearing like a jewel, 212.
वर्णविपर्यास *m.* a change of colour, 242.
वर्णवैपरीत्य *n.* see वर्णविपर्यास 243.
*वाजिराज *m.* the best among the horses, 27.
वाजिवाह *m.* a horse, 141.
वातपित्तघ्न *mfn.* destroying rheumatism and bile, 160.
वातपित्तार्दित *p. p.* afflicted by rheumatism and bile, 222.
वातरक्तार्दित *p. p.* afflicted by rheumatism and blood, 195.
वातादिधातु *m.* a constituent element or essential ingredient of the body including wind and others, 297.
वानराक्ष *mfn.* monkey-eyed (horse), 72.
वायु *m.* the windy humour or any morbid affection of it, 172.
विकीर्णपुच्छ *m.* having a dishevelled tail, 165.
विजयाख्य *mfn.* (a curl) by name Vijaya, 37.
विजयावर्त *m.* a curl by name Vijaya, 38.
विजलिका *f.* a kind of medicine for horses, 354.
वृष्य *mfn.* stimulating, 160.

शालिहोत्र[2] *n.* a work on veterinary science,

---

1. Occurs only as an adjective in M. W. 2. The work is attributed to the sage Śālihotra only.

शिराद्वार *n.* a door or outlet of veins, 230.
शिरामोक्ष *m.* vein-loosing, blood-letting, venesection, 151.
शिरामोचन *n.* see शिरामोक्ष, 229.
शिव *m.* a kind of horse, having a curl on the right cheek,
शिवसंज्ञिक *m.* a horse named Śiva, having a curl on the right cheek, 32.
शूलनाशन[1] *mfn.* removing pain in the stomach, 328.
शृङ्गवत् *mfn.* possessed of horns, horned, 63.
शृङ्गिन् *m.* a kind of horse, having horns, 57.
श्यामकर्ण *m.* a kind of horse, which is all white and having one black ear, 8.
श्यामैककर्णक *m.* a horse, having one black ear, 7.
श्रीवत्स *m.* a particular mark or curl of hair on the breasts of Viṣṇu or Kṛṣṇa and of other divine beings, said to be white and represented in pictures by a symbol resembling a cruciform flower, 85.
श्रेणिक *m.* a kind of horse, having a line of three curls on the forehead, 76.
श्लेष्मरक्तप्रकोप *m.* an excitement or raging of phlegm and blood, 179.
श्लेष्मल *mfn.* phlegmatic, abounding in phlegm, 245.
श्लेष्मविनाशन *mfn.* destroying phlegm, 312.
श्वेतपाद् *mfn.* (horse) having white feet, 5.
श्वेतरक्त *mfn.* pale-red, 215.

संनिपात *m.* a complicated derangement of the three humours or an illness produced by it, 320.
संपुट *n.* cavity, 52.
सर्ववर्ण *mfn.* all-coloured, 9.
सर्वश्वेत *mfn.* entirely white, 7.
सर्वसन्धि *m.* all joints, 233.
सर्वोपचर्या *f.* all kinds of treatment, 283
सशर्कर[2] *mfn.* mixed with sugar, 265.
सांनिपातिक *mfn.* complicated especially applied to a dangerous illness of the three humours, 247.
*सुच्छाया *f.* a good shade, a thick shade, 308.
सूर्यसंज्ञिक *m.* a kind of horse, named sūrya, 20.
स्तनिन् *m.* a kind of horse, having a breast or udder (said of a horse having this particular deformity), 81.
स्थानक *n.* dignity, rank, 121.
स्थानपाल *m.* a keeper, watchman, superintendent, 336.
स्थिर *mfn.* strong, firm, 139.
स्राव्य *pot. p.* to be caused to flow, 243.
स्वस्तिक *m.* a kind of mystical mark, 85.

हयागार *n.* horse-stable, 333.
हीनदन्त *m.* a kind of horse, who is devoid of teeth, 56.
हीनाण्ड *m.* a kind of horse, having no testicle, 64.

---

1. Occurs only in neuter in M. W. 2. 'With brown sugar' (M. W.).

# APPENDIX V

## Glossary

of important words from additional passages.

अगुरुगन्धिक *mfn.* having the fragrance of Aloe wood, 16.

अश्वयुज *m.* the month Aśvina, 100.

अश्वशाला *f.* a stable for horses, 83.

आप्य *m.* a kind of horse, born in water, 153.

इन्द्रादेश *m.* N. of a country, 3.

उल्बण *n.* the membrane enveloping the embryo, 147.

कषातिघात *m.* a severe cut or stroke with a whip, 139.

काचा *f.* a condition of having a crystalline colour, 29.

काञ्चन *n.* gold, 172.

कालिका *f.* blackness, 29.

कुज *m.* N. of the planet Mars, 88.

कुन्देन्दुसङ्काश *mfn.* resembling the white jasmine and the moon, 25.

कृतान्त *m.* God of death, 67.

केकाण *m.* a horse belonging to Kekāṇa locality, 8.

कोष्णभाव *mfn.* possessing warmth, 19.

कौसुम्भसंनिभ *mfn.* appearing like wild safflower, 25.

क्षतज *n.* blood, 79.

*क्षत्रिय[1] *m.* a kind of horse, 14.

क्षीणाङ्ग *mfn.* having emaciated limbs, 130.

खुरशाल *m.* a horse belonging to khuraśāla locality, 7.

गह्वर *m.* a horse belonging to a particular locality, 10.

गागन *m.* a kind of horse, 161.

गोजिकाण *m.* a horse belonging to a particular locality, 8.

घृतगन्ध *m.* a horse having the smell of a ghee, 17.

घृतगन्धि *m.* see घृतगन्ध, 124.

चलकिसलयपाद् *m.* a horse having his feet like moving shrouts, 89.

चिकित्सा *f.* medical attendance, medical examination, 165.

जलज *m.* a kind of horse (born in water), 12.

जलोद्भव *m.* see जलज, 14.

तनुबल *mfn.* of small strength, 152.

ताजित (क ?) *m.* a horse belonging to a particular locality, 7.

ताडज *m.* a kind of horse (born in mountain), 9.

*तामस *m.* a kind of horse possessing the quality of *tamas*, 136.

ताम्र *n.* copper, 172.

ताम्रफल *m.* Alangium hexapetalum, 170.

तिल *m.* sesamum indicum, 168.

तुरगयातृ *mfn.* a horse-driver, 92.

तुषार *m.* a kind of horse, 7.

*तैजस *m.* a kind of horse, 157.

तैजससंज्ञक *m.* a horse by name *Taijasa*, 158.

त्रिगुण *m.* (a horse) possessing the three qualities, 144.

त्रिवलि *f.* three folds, 63.

1. The Vocables marked with asteric sign are not found in M. W. in this sense.

दीर्घकलेवर *m.* (a horse) having long or tall body, 154.
दीर्घदेह *m.* see दीर्घकलेवर, 140.
द्विगुण *m.* (a horse) possessing two qualities, 143.
*द्विज *m.* a kind of horse, 14.
*द्विजाति *m.* see द्विज, 133.
द्विभौतिक *m.* (a horse) possessing two elements of the five, 162.

*धूमकेतु *m.* a kind of horse, 65.

नभस् *m.* the rainy season, 100.

पराशरमत *n.* the opinion of the sage Parāśara, 147.
पराशरसंहिता *f.* N. of a work, 145.
पिडका *f.* a small boil, 72.
पित्तग्रस्त *mfn.* affected by bile, 80.
पुष्पगन्धि *m.* a kind of horse, possessing the fragrance of a flower, 16.
पुष्पाख्य *m.* a kind of horse named Puṣpa, 59.
प्रतिक्रिया *f.* a remedy, 174.
प्रभञ्जनभव *m.* a kind of horse (wind-born), 15.
प्रशान्ति *f.* pacification, destruction, 173.

भौम *m.* a kind of horse (belonging to the earth), 151.
*मक्षिका *f.* blackness a condition of having a colour like that of a bee, 29.
मधुजाल *n.* a honey-comb, 83.
मधुमक्षिका *f.* a honey-fly, a bee, 83.
मात्रा *f.* a length of time consisting of eight moments, 96.
मूषलक *m.* a particular condition of horse's teeth, 30.
मृगज *m.* a kind of horse (born of deer or animals in general), 13.

राजशूल *m.* a kind of horse, belonging to a particular locality, 9.
*राजस *m.* a kind of horse possessing the quality of *rajas*, 136.
रेवत् pre. p. leaping, jumping, 169.

वज्राग्निसदृश *mfn.* resembling the thunderbolt and the fire, 101.
वह्निजात *m.* a kind of horse (born of fire), 12.
वह्निसंभव *m.* see वह्निजात, 14.
वाजिनिन्दित p. p. belonging to the lowest class of horses, 144.
वाजिमध्यम *m.* belonging to the middle class of horses, 143.
वायव *m.* a kind of horse 155.
*विप्र *m.* a kind of horse, 16.
विमिश्रवर्णक *mfn.* of mixed colours, 50.
विवेकिन् *mfn.* judicious, 18.
*वैश्य *m.* a kind of horse, 15.
वैश्यजाति *m.* (a horse) belonging to Vaiśya class, 127.
व्यञ्जन *n.* a manifestation, indication, 27.

*शङ्ख *m.* a condition of having a colour like that of a conch-shell, 30.
शनि *m.* the planet Saturn, 88.
शालिहोत्र *m.* N. of a sage and a writer on veterinary science, 3.
शालिहोत्रादिविज्ञान *n.* knowledge of the works of Śālihotra and others, 166.
शुक्ति *f.* a curl or feather on horse's neck or breast, 55.
*शुक्ला *f.* whiteness, 29.
शुद्धवर्ण *mfn.* having a pure colour or caste, a being of high caste, 137.
शुष्क *mfn.* emaciated, 154.
शूद्रक *m.* a kind of horse, 17.
शूद्रजाति *m.* a kind of horse belonging to a Śūdra class, 15.

समीरप्रभव *m.* see प्रभञ्जनभव, 13.
*सात्विक *m.* a kind of horse, possessing the quality of *Sattva*, 136.
साध्यवास *m.* a kind of horse belonging to a particular locatity 10.
सिन्धुदा(पा ?)र *m.* a kind of horse, belonging to a particular locality, 10.
हरिणी *f.* yellowish whiteness, 29.

# APPENDIX VI

## Glossary

of Indian Drugs mentioned by Bhoja in this text.

अजमोदा *f.* Pimpinella involucrata syn. Apium involucratum, 349.

अतिविषा *f.* Aconitum heterophyllum, 350.

अम्लवेतस *m.* a kind of sorrel, the plant Rumex Vesicarius, 328.

इन्द्रवारुणी *f.* colocynth, a wild bitter gourd. cucumis colocynthis, 329.

कङ्कोल *n.* a kind of plant. cubeb Pepper. cubeba officinalis, 321.

कटु *m.* N. of a plant.

कटुका *f.* Picrorrhiza kurroa, 325.

कटुतैल *m.* white mustard, 259.

कृष्णाजीरक *m.* Nigella sativa (having a small black seed used for medical and culinary purposes), 348.

केतकी *f.* the tree Pandonus odoratissimus, 321.

केसर *n.* the flower of Rottleria tinctoria, Mimu sops, Elengi and Mesua ferrea, 331.

कोमला *f.* a kind of date, 268.

क्षीर *n.* the milky juice or sap of trees, milk, 161.

गुड *m.* treacle, molasses, 177.

गुडूची *f.* N. of a very useful plant. Tinospora Cordifolia. Syn Menispermum cordifolium, 319.

गोक्षुर (क) *m.* Tribulus lanuginosus, 189.

गोमूत्र *n.* cow's urine, 250.

घृत *n.* ghee, 184.

चणक *m.* cicer arietinum. gram or chick-pea, 277.

चन्दन *m. n.* white sandal wood (sirium myrtifolium), Santalum album, 317.

चित्रक *n.* Plumbago zeylanica, 325.

तगर *n.* Tabernaemontana coronaria and a fragrant powder prepared from it, 319.

त्रिकटुक *n.* The aggregate of three spices viz. black and long pepper, and dry ginger, 177

त्रिफला *f.* The three Myrobalans (fruits of Terminalia Chebula, T. Bellerica and Phyllanthus, 325.

दूर्वा *f.* Dūrb grass, Panicum Dactylon 306.

द्राक्षा *f.* vine, grape. Vitis vinifera. Dried fruits called kismis, 321.

नागर *n.* dry ginger, the root of Cyperus Portenuis. Zingiber officinale, 311.

निम्ब *m.* the Nimb tree. Azadirachta Indica, 350.

निम्बपत्र *n.* a leaf of Nimb tree 344.

निर्गुण्डी *f.* Vitex Negundo, 345.

पद्मनाल *n.* stalk of a lotus, 331.

पिच्छिल *m.* Cordia Latifolia. Tamarix Indica, 245.

पिप्पली *f.* Piper longum. syn. chavica roxburghii, 329.

बदरीफल *n.* the fruit of the jujube, 331.

मत्स्यमांस *n.* fish-flesh, 323.

मधुयष्टिका *f.* Glycyrrhiza glabra, Linn, 321.

मसूर m. Vicia lens. syn. Cicer lens, 278.
माक्षिक n. honey, 317.
माष m. A sort of kidney bean (Phaseolus radiatus or P. Roxburghii, 323.
माषोत्थ n. gruel made of beans 271.
मुकुष्ट m. a species of bean, 268.
मुद्ग m. Phaseolus Mungo (both the plant and its beans), 300.
मुस्ता f. a species of grass. Cyperus Rotundus, 319.
मेथिका f. Trigonella Foerum Graecum, 348.

यव m. barley. Hordium hexastichum, 283.
यवस m. n. grass, fodder, pasturage, 279.
यवसक्तु m. barley-groats, 267.
यवोत्थ n. sour barley-gruel, 276.
यष्टि m. f. liquorice, Clerodendrum, Siphonantus, 190.

राजिका f. Brassica juncea. syn. Sinapis Ramosa. Sinapis juncea or Brassica nigra, 349.

लवण n. salt, 260.
लशुन n. Allium sativum, 352.
लोहचूर्ण n. rust of iron, 196.

वचा f. a kind of aromatic root (Acc. to some = Acorus Colamus, 190.
वत्सक m. Wrightia Antidysenterica, 350.
विजालिका f. a kind of medicine specially meant for horses, 354.
विडङ्ग n. the fruit or seeds of Embelai Ribes, 325.
विडङ्गक n. the fruit or seeds of Embelia Ribes, 350.

शतपुष्पा f. Anethum Sowa. Peucedanum sowa. Peucedanum Graveslons. drill seeds, 349.
शर्करा f. ground or candied sugar, 321.
शिरिष n. the flower of Albizzia lebbec, syn. Acacia lebbec, Acacia Sirissa, 205.
शुण्ठी f. dry ginger. Gingiber officinale, 183.
श्यामा f. N. of various plants, 190.
श्रीपर्णी f. Gmelina Arborea, 331.

सर्षप m. mustard, mustard seed. Brassica campestris. syn. Dinapis dichotoma, 349.
सितसर्षप m. white mustard or mustard seed, 319.
सैन्धव m. n. salt, 311.
सौवर्चल m. n. sochal salt (prepared by boiling down soda with emblic myrobolan, 329.
सौवीर n. the fruit of the jujube, sour gruel, 352.

हरिद्रा f. Curcuma Longa, turmeric or its root ground to powder, 329.
हरीतकी f. the yellow Myrabalan tree, Terminalia Chebula. (the fruit is used for dyeing yellow and as a laxative, 249.
हिङ्गु n. a fluid or resinous substance prepared from the roots of the Asa Foetida (used as a medicine or for seasoning), 190.

# APPENDIX VII

## Index Verborum to the Text[1]



1. Only the first occurrence of the vocable is recorded.

2. The vocables marked with asteric sign are not recorded in the Sanskrit-English Dictionary of Manior Williams.

# APPENDIX VIII

Index of important words in additional passages from Yuktikalpataru.



1. The Vocables marked with asteric sign are not recorded in Monier Williams.

---

## CORRIGENDA

| *Page* | *Line* | *Text* | |
|---|---|---|---|
| 3 | 2 | for जयप्रद्रौ | read जयप्रदौ |
| 5 | 3 | ,, (नेनैन) | ,, (नेनैव) |
| 17 | 17 | ,, पद्मतालं | ,, पद्मनालं |
| 31 | last | ,, य. क. | ,, यु. क. |
| 37 | 21 | ,, पद्मतालं | ,, पद्मनालं |
| 44 | F. N. 67 | ,, शु. य. | ,, यु. क. |
| 61 | F. N. 2 | ,, Manior | ,, Monier |
| 64 | 17 | ,, भासदेश | ,, मालदेश |